द्व्याहं वा श्रीराम्लभोजिनं पञ्चनमस्कारजपनिरतं शिष्यं विधाय आसन्नलग्नदिने संध्यायां व्याघाताद्येकतमं कालं संशोध्य प्रातरुत्थाय शुद्धकालं प्रवेश्य स्वाध्यायं प्रस्थाप्य ततश्चैशान्यां मण्डपवेदिकायां चतुर्हस्तं रजोभिश्च पञ्चवर्णैरुपशोभितं मध्यलिखितद्वात्रिंशदङ्गुलं शुक्लपद्मं द्वात्रिंशदङ्गुलायामं षोडशाङ्गुलं विस्तृतावाहनीयद्वारा- भिमुखसर्वरजोमुक्तपादपीठसहितं बाह्यचित्रवल्लीद्वारमक्षकोणस्थकन्दुकाद्युपशोभितं स्वस्वदिक्स्थावाहनीय- द्वारपूर्वदिग्वाश्रितद्वारं वा मण्डलमालिखेत्। तत्र वीथ्यन्तर्गतान् पूर्वादिक्रमेण शुक्लरजसाऽष्टौ शङ्खान् आ- नन्द-सुनन्द-नन्दि-नन्दिवर्धन-श्रीमुख-विजय-तार-सुतार-संज्ञान् सुभद्र-विजयभद्र-सुदन्त-पुष्पदन्त- जय-विजय-कुम्भ-पूर्णकुम्भसंज्ञांश्च तथाविधान् कुम्भानालिखेत्। मण्डलस्योपरि धवलं विचित्रं वा किङ्कि- णीघण्टायुक्तं मुक्ताजालगवाक्षकोपेतं मणिदामोपशोभितं सचामरपट्टवस्त्रोपेतं लम्बमानप्रतिसरकन्दुकाद्यल- ङ्कृतं वितानकं विदधीत। मण्डपस्याभ्यन्तरं क्वचित्पद्मिनीपत्रसंछन्नमन्तरालेषु बहिश्च गौरसर्षपलाजाखण्डत- ण्डुलयवदूर्वाकाण्डरजोभिश्च विचित्रं कुर्यात्। तोरणं चास्य ध्वजाङ्कुशचीरै[3]मण्डितं चन्दनमालायुक्तं पूर्वस्यां न्यग्रोधं, दक्षिणस्यामौदुम्बरं, पश्चिमायामाश्वत्थं, उत्तरस्यां प्लाक्षं, विनिवेश्य विदिक्षु प्रशस्तद्रुमजातानि च निवेशयेत्। शङ्खान् कलशांश्च मूर्तिमतो गोरोचनारचितस्वस्तिकाष्टकार्चितकण्ठान् सर्वरत्नैः सर्वबीजैः सर्वौषधिगन्धैरद्भिश्च पूरितान् वस्त्रस्रग्दामकण्ठान् चन्दनोपलेपितान् शतकृत्वोऽभिमन्त्रितान् पीठिकाया

१ विभद्र इति ग. पाठः। २ जय इति ग. पाठः। ३ चारमंडितं इति ग. पाठः। ४ नैयग्रोधं इति पार्श्वपाठः। ५ कृत्वाभि इति क. ग. पाठः।

बहिर्दिक्षु विदिक्षु च स्थापयेत्। तत्रायत आनन्दः। नात्यायतः सुनन्दः। महाकुक्षिर्नन्दी। सुनाभिर्नन्दिवर्धनः। ह्रस्वनाभिः श्रीमुखः। नाभिमण्डली विजयः। सुनिर्घोषस्तारः। उच्चस्वनः सुतारश्चेति। कलशाश्च–मन्थरसुभद्रः। किञ्चिदुन्नतो विभद्रः। पृथुलोष्ठः सुदन्तः। ह्रस्वोष्ठः पुष्पदन्तः। मन्थरग्रीवो जयः। शोभनग्रीवो विजयः इति मण्डलस्योत्तरे[1] दुःस्वरं[2] सदशाहतसितवस्त्रच्छन्नं भद्रासनं विन्यस्य तस्मिन् शिष्यं शङ्खतूर्यवीणावेणुस्वस्तिपुण्याहमङ्गलध्वनिभिः कृतमङ्गलं पूर्वद्वाराभिमुखं समुपवेश्य जातबीजशरावैश्चित्रमुखैर्गुणैरङ्गलिकारकैर्नागैरभिन्नपुटकोकाभिर्निर्मृश्य वल्मीकाग्र–पर्वताग्र–नदीतीर–महानदीसंगम–कुशबिल्वमूल–चतुष्पथ–दन्तिदन्त–गोशृङ्ग–एकवृक्षगृहीताभिर्मृद्भिः प्रथमं, तदनु पञ्चामृतेन, ततो वासचन्दनपञ्चपल्लवकषायैः सर्वगन्धैश्च संस्नाप्य प्रदक्षिणोपनीतैः पूर्वविन्यस्तकुम्भैराचार्यमन्त्रमनुस्मरन्नभिषिञ्चेत्। ततः स्नानवस्त्रं परित्यज्य शुक्ले वाससी परिधाय्याखण्डतण्डुलैः स्नापयेत्। तैश्च प्रवृद्धैः प्रवृद्धां समैः समां हीनैश्च हीनामुन्नतिं जानीयात्। तदनु मूलमण्डपवेदिकायां पञ्चवर्णेन रजसा रत्नकाञ्चनरजतमयप्राकारत्रयोपेतं गोपुर–चतुष्कालङ्कृतं तोरण–ध्वज–पुष्करिणीपुष्प–प्राकारोपशोभितं समवसरणमालिख्य मध्ये च पद्मरागादिभिर्निर्मिते मृगाधिपासने चतुर्मुखमष्टप्रातिहार्योपेतं भगवन्तं संस्थाप्य वेदीयवारकवितानकपुष्पगृहादिकं पूर्ववत्कृत्वा शिष्यं तत्रानीय सकलिकां विधाय मन्त्रैरालभ्य मुक्तपुष्पैः सम्पूज्यालङ्कारैरलङ्कृत्याक्षतानाचार्यमन्त्रेणाभिमयानुय-

१ स्यान्तरे इति ग. पाठः। २ सुनृदुःस्वरं इति क. ख. पाठः।

योगगणानुज्ञार्थं चैत्यवन्दनं श्रुतादिदेवतानां च कायोत्सर्गाणि कृत्वा पञ्चनमस्कारपूर्वकं नन्दिसूत्रमावर्तयेत्। शिष्योऽपि मुखवस्त्रिकया स्थगितमुखकमलः शृणुयात् । अनन्तरमाचार्यो भगवत्पादयुगे वासान् प्रक्षिप्य गोमयशालिपुष्पादिचूर्णमयान् सङ्घभट्टारकस्य वासान् दत्वा एवं ब्रूयात्–'अहमस्य साधोरनुयोगमुक्तलक्षणमनुजानामि क्षमाश्रमणानां हस्तेन द्रव्यगुणपर्यायैर्व्याख्याङ्गरूपैरेषोऽनुज्ञातः' इत्यत्रान्तरे वन्दित्वा शिष्यः 'संदिशत यूयं किं भणामि' इत्यादिवर्णजातं यथैव सामायिकैः तथात्रैव द्रष्टव्यमिति। तदनु वासःक्षेपपूर्वकं प्रदक्षिणात्रयं कारयित्वाऽनुयोगानुज्ञां[1] दद्यात् । तदर्थं कायोत्सर्गं कृत्वा निपद्यायामुपविश्य आत्मनो दक्षिणभागे शिष्यमुपवेश्य लग्नवेलायां कुम्भकयोगेनाचार्यपरम्परागतं पुस्तकादिपु लिखितमाचार्यमन्त्रं निवेदयेत्। ततो गन्धपुष्पाक्षतान्वितं मुष्टित्रयमक्षाणां दत्त्वा तदनु छत्र–चामर–हस्त्यश्व–शिविका–राजाज्ञानि योगपट्टक–खटिका–पुस्तका–ऽक्षसूत्र–पादुकादिकं च दद्यात् । स्वशाखानुगतं च नाम दत्त्वा स्वगच्छेन सह द्वादशावर्तवन्दनकं दत्त्वा गणं समर्प्याज्ञां श्रावयेत्–'अद्यप्रभृति दीक्षाप्रतिष्ठाव्याख्यादिकं ज्ञात्वा परीक्ष्य च त्वया विधेयम्' इति। ततश्च 'व्याख्यानं कुरु' इत्यनुज्ञातो नन्द्यादिव्याख्यानं यथाशक्त्या करोत्यभिनवाचार्यः। तदनु मूलाचार्यो निपद्यायां समुपविश्य–"षट्त्रिंशद्गुज्ज्वलमहागुणरत्नधुर्यैरेतत्पदं प्रथितगोतममुख्यपुम्भिः। आसेवितं सकलदुःखविमोक्षणाय निर्वाहणीयमशठं भवतापि नित्यम् ॥ १ ॥ आरोप्यते

१ नुयोगाज्ञां इति ग. पाठः ।

पदमिदं बहुपुण्यभाजो निर्वाहयन्ति च निरन्तरपुण्यभाजः । आराध्य शुद्धविधिना धनमेकमेकं संप्राप्नुवन्ति शनकैः शिवधामसौख्यम् ॥ २ ॥ नास्मात्पदाज्जगति साम्प्रतमस्ति किंचिदन्यत्पदं शुभतरं परमं नराणाम् । येनात्र पञ्चपरमेष्ठिपदेषु मध्येऽतिक्रान्तमाद्ययुगलं खलु कालदोषात् ॥ ३ ॥” इत्यादिवाक्यैराचार्योऽनुशास्तिं दद्यात् । तदनु भगवते निवेद्य ‘आचार्योऽयं त्वदनुज्ञातो मया कृतो भवत्प्रसादादधिकारं निर्विघ्नेन करोतु’ इति विज्ञापयेत् । पुनर्भगवते प्रणिपातं कारयित्वा भगवन्तं क्षमापयेत् । स च लब्धाधिकारो गुरुपारम्पर्यागतमधिकारं कुर्यादिति ॥ एवमनेन विधिना राज्यकामस्य[1] भ्रष्टराज्यस्य पुत्रकामसौभाग्यकामयोश्चाभिषेकं कुर्यादिति ॥ अत्र शङ्खादीनां मन्त्राः । ॐ आं इं उं आनन्दात्मने नमः । एवं शेषा अपि पूर्वोत्तरान्ता विज्ञेयाः । ॐ आं ईं ऊं सर्वरत्नेभ्यो विश्वात्मकेभ्यो नमः । रक्षामन्त्रः । सर्वबीजेभ्यः इन्द्रात्मकेभ्यो नमः । बीजमन्त्रः । सर्वौषधिभ्यः सोमात्मिकाभ्यो[2] नमः । औषधिमन्त्रः । सर्वगन्धेभ्यः पार्थिवात्मकेभ्यो नमः । गन्धमन्त्रः । सर्वमृद्भ्यः पृथिव्यात्मिकाभ्यो[3] नमः । मृत्तिकामन्त्रः । न्यग्रोधात्मने सुराधिपतोरणाय नमः । १ । पलाशात्मने तेजोधिपतोरणाय नमः । २ । उदुम्बरात्मने धर्मराजतोरणाय नमः । ३ । सिद्धकात्मने रक्षोधिपतोरणाय नमः । ४ । अश्वत्थात्मने सलिलाधिपतोरणाय नमः । ५ । मधुकात्मने पवनाधिपतोरणाय नमः । ६ । प्लक्षात्मने यक्षाधिपतोरणाय नमः । ७ । बिल्वात्मने विद्याधिपतोरणाय नमः । ८ । तोरणमन्त्रः ॥ इति आचार्याभिषेकः ॥

१ कामभ्रष्ट इति ग. पाठः । २ सोमात्मकेभ्यः इति क. ख. ग. पाठः । ३ पृथिव्यात्मकेभ्य इति क. ख. ग. पाठः ।

## ॥ अथ भूपरीक्षा ॥

अथ प्रासादं चिकीर्षुः प्रागेव सुपरीक्षितां भुवं गृह्णीयात्। तत्र भूमिः शुक्ला आज्यगन्धा मधुरा ब्राह्मणस्य। रक्ता रक्तान्तगन्धा कषाया क्षत्रियस्य। पीता तिक्तान्तगन्धा वैश्यस्य। विगन्धा कटुका कृष्णा मद्यगन्धा शूद्रस्य। शेषा चतूरूपाऽपि खातवारिदीपगुणादिना परीक्षणीया। तत्र हस्तमात्रं खातं तत्रत्यमृदा यस्याः पूर्यते सा मध्यमा। या उद्धरति मृत्तिका सा श्रेष्ठा। यत्राऽपरिपूर्णा मृत्तिका साऽधमा। उदकेन च खातमापूरितं पदशतगमनागमनपर्यन्तं यत्र सम्पूर्णं दृश्यते सा ज्यायसी। अङ्गुलोनं मध्यमा। बहुभिरङ्गुलैरूनं निकृष्टेति। आमकुम्भस्य वा उपरि घृतपूर्णामशरावे[1] चतुर्दिक्षु सितरक्तपीतकृष्णवर्तिचतुष्टयं प्रज्वालयेत्। (प्रज्वालितं हृदयादिमन्त्रसम्पूजितमास्नेहान्तं[2]) यदि पश्येत्तदा सर्ववर्णानां भूः प्रशस्तेति जानीयात्। अथ निर्वाणा यावन्त्यस्तावतां सा न प्रशस्तेति। एवं परीक्ष्य तस्यां यथोक्तं मण्डपं कुण्डसहितं कारयित्वा द्वारपालपूजादिमन्त्रतर्पणान्तं कर्म कृत्वा मूलमन्त्रेण सहस्रं हुत्वा कुम्भपञ्चकं ससधान्यानामुपरि स्थितं पुण्योदकपूर्णं प्रशस्तौषधीरत्नगर्भं चूताश्वत्थादिपल्लवबीजपूरादि[3]फलोपशोभितं वस्त्रयुगावृतं स्रक्सूत्रकण्ठं शासनेन साङ्गेन भगवता समधिष्ठितं सम्पूज्य लग्नकाले प्रासादस्य मध्यस्थाने कुम्भजलं प्रक्षिप्य पूर्वदक्षिणपश्चिमो-

---

१ घृतपूर्णशरावे इति ग. पाठः। २ धनुश्चिह्नान्तर्वर्ती भागः क. ख. योर्नास्ति। ३ बीजपूगादि इति ग. पाठः।

त्तरसीमासु च ततो मध्यस्थखातात्तस्मात् मृदमादाय नैर्ऋत्यां दिशि प्रक्षिपेत्। कुम्भावशिष्टजलेन खातं चाप्लाव्य कुद्दालादिकं संस्थाप्य पूजयेत्। ततः परं पूर्णकुम्भं वस्त्रयुगच्छन्नास्यमिन्द्रस्य[1] स्कन्धे निधाय गीतवाद्यादिब्रह्मघोषेण बहुजनसाक्षिकं यावदभिप्रेतं पुरः पूर्वसीमान्तं[2] नयेत्। तत्र च मुहूर्तमात्रं स्थित्वा प्रदक्षिणमार्गे आग्नेयादिईशानदिगन्तं भ्रामयेत्। ततः प्रासादभूमौ शङ्कष्टकं प्रासादसीमाविनिश्चयार्थं चतुर्षु कोणेषु विन्यस्य सूत्रेण संयोज्य सुवर्ण–रजत–मुक्ता–दध्यक्षतादिभिरेषां प्रदक्षिणां कुर्यादिति भूमिपरिग्रहं विधाय। मनोवृत्त्या वास्तुं संकल्प्याऽशल्यं निरूपयेत्। तत्र यजमानाङ्गकण्डूयनादिना क्षेत्रे शृगालादिप्रवेशेन वा लग्नेन वा ध्वजाद्यायैर्वा कचटतपयसहयजैर्नवभिर्वर्णैः प्रश्नैर्वा शल्यं जानीयात्। तत्र शिरःकण्डूयने शिरःशल्यम्। तत्प्रमाणेन अन्यदङ्गकण्डूयनादिना विकृतिं करोति तदङ्गेन तत्प्रमाणेन शल्यम्। द्विरूपे द्विरूपं शल्यम्। सर्वाङ्गिके विकारे सर्वत्र शल्यम्। ज्ञात्वा खनित्वा शल्यमुद्धृत्य हस्तापूरपाषाणैरष्टाङ्गुलोद्धृतमृदं तैर्जलाप्लावितैर्मुद्गरकुट्टितैः पादत्रयान्तमापूर्य समप्लवां सुघटितां सुश्लक्ष्णां भुवं विधाय छायाशङ्कादिना प्राचीं दिशं संसाध्य शिलासु लाञ्छनानि कृत्वा सम्पूजयेत्। इति भूपरीक्षा ( भूपरिग्रहः ) समाप्ता ॥

---

१ मिन्द्रस्कन्धे इति ग. पाठः। २ सीमन्तं इति क. पाठः।

## ॥ अथ शिलान्यासविधिः ॥

तत्र प्रासादक्षेत्रमष्टधा विभज्य चतुष्षष्टिकोष्टकान् कृत्वा चैशान–नैऋत्य–मूर्ध्ववंशं आग्नेयाश्च वायव्यान्तं तिर्यग्वंशद्वयं दत्त्वा द्विपदं षट्पदं च रक्षाष्टकं विन्यस्य मर्माणि ज्ञात्वा ईशानकोणार्धे ईशं दत्त्वा 'पर्जन्यजयमाहेन्द्ररविसत्यभृशान्पदिकान् सम्पूज्य अग्निकोणकोष्ठके व्योमपावकौ विन्यस्य पूषावितथग्रहक्षतयमगन्धर्वभृङ्गान् पदिकान् दत्त्वा नैऋत्यकोणकोष्टके मृगपितरौ विन्यस्य दौवारिकसुग्रीवपुष्पदन्तवरुणअसुरशोपान् पदिकान् सम्पूज्य तदनु वायव्यकोणकोष्टके रोगवायू विन्यस्य नागमुख्यभल्लाटसोमदितिअदित्यन्तान् पदिकान् सम्पूज्य ईशानकोणे अदितिं संपूजयेत् ॥ मध्ये पदचतुष्टये ब्रह्माणं तस्यैशान्यां पदिकौ आपवत्सौ प्राच्यां षट्पदं मरीचिं आग्नेय्यां सवितासावित्रौ पदिकौ दक्षिणस्यां षट्पदं विवस्वन्तं नैऋत्यामिन्द्रजयौ पदिकौ वारुण्यां षट्पदं मित्रम् वायव्यां रुद्ररुद्रदासौ पदिकौ उत्तरस्यां षट्पदं धराधरं इति आपवत्सादिक्रमेण दूर्वादध्यक्षतादिभिः सम्पूज्य ईशानादिदिक्षु चरकी स्कन्दा विदारी अर्यमा ललना जम्भा पूतना पापराक्षसी विलिपिच्छान्तैर्बहिर्दैवताष्टकं पूजयेदिति । एकाशीतिपदे गृहवास्तौ मध्ये ब्रह्मा नवपदे मरीचाद्याः षट्पदा ईशानाद्याः आपचन्द्राद्या द्विपदाः पदिकाबहिर्दैवताश्च पूर्ववादसरक्षादिकं चेति एवं वास्तुं सम्पूज्य मर्माणि परिहृत्य शिलाप्रतिष्ठादिकं विदध्यात् । शिलाप्रतिष्ठाविधिः समासः ॥

१ कोणके इति ख. ग. पाठः । २ भल्लाट इति क. ख. ग. पाठः । ३ आयवत्सो इति क. ख. पाठः । ४ वर्द्ध इति ख. ग. पाठः ।

## ॥ अथ प्रतिष्ठाविधिः ॥

तत्र [1]स्थाप्यस्य जिनबिम्बादेर्भद्रपीठादौ विधिना न्यसनं प्रतिष्ठा। तस्याश्च स्थापकत्रयं शिल्पी १ इन्द्रः २ आचार्य ३ श्चेति। तत्राद्यः सर्वाङ्गावयवरमणीयः क्षान्तिमार्दवार्जवसत्यशौचसम्पन्नः मद्यमांसादिभोगरहितः कृतज्ञो विनीतः शिल्पी सिद्धान्तवान् विचक्षणः धृतिमान् विमलात्मा शिल्पिनां प्रधानो जितारिषड्वर्गः कृतकर्मा निराकुल इति १। इन्द्रोऽपि विशिष्टजातिकुलान्वितो युवा कान्तशरीरः कृतज्ञो रूपलावण्यादिगुणाधारः सकलजननयनानन्दकारी सर्वलक्षणोपेतो देवतागुरुभक्तः सम्यक् रत्नालङ्कृतः व्यसनासङ्गपराङ्मुखः शीलवान् पञ्चाणुव्रतादिगुणयुतो गम्भीरः सितदुकूलपरिधानः कृतचन्दनाङ्गरागो मालतीरचितशेखरः कनककुण्डलादिभूषितशरीरस्तारहारविराजितवक्षस्थलः स्थपतिगुणान्वितश्चेति २। सूरिश्चा[2]र्यदेशसमुत्पन्नः क्षीणप्रायकर्ममलो ब्रह्मचर्यादिगुणगणालङ्कृतः पञ्चविधाचारयुतो राजादीनामद्रोहकारी श्रुताध्ययनसम्पन्नः तत्त्वज्ञो भूमिगृहवास्तुलक्षणानां ज्ञाता दीक्षाकर्मणि प्रवीणो निपुणः सूत्रपातादिविज्ञाने स्रष्टा सर्वतोभद्रादिमण्डलानामसमः प्रभावे आलस्यवर्जितः प्रियंवदो दीनानाथवत्सलः सरलस्वभावो वा सर्वगुणान्वितश्चेति। स च षष्ठाष्टमादितपोविशेषं विधाय कारापकानुकूले लग्ने हस्तादारभ्य नवहस्तान्तानां प्रतिमानामाद्यासु तिसृषु अष्टनवदशहस्तं इतरासु चतुर्हस्तादिप्रतिमासु हस्तद्वयवृद्ध्या, यद्वा एकहस्तादिक्रमेणैव द्वादशद्विहस्तवृद्ध्या

१ स्थाप्यजित इति ग. पाठः। २ श्चोपदेश इति क. ग. पाठः।

प्रागेव मण्डपं प्रासादस्याग्रतः कारयित्वा तस्य प्राच्यामीशान्यां वा स्नानमण्डपमधिवासनामण्डपार्धेन निवेश्य लघुप्रतिमासु पञ्चषट्सप्तहस्तानि तोरणानि इतरासु च वसुवेदाङ्गुलाग्राणि न्यग्रोधोदुम्बराश्वत्थप्लक्षद्रुमसमुद्भवानि पूर्वादारभ्य शान्तिभूतिबलारोग्यसंज्ञकानि तोरणान्यस्त्रशुद्धानि वर्मावगुण्ठितानि प्रणवेन विन्यस्य हन्मन्त्रैः स्वनामभिरभ्यर्च्य तच्छाखयोर्मेघमहामेघौ कालनीलौ जलाजलौ अचलभूलितौ प्रणवादिस्वाहान्तैः स्वनामभिः सम्पूज्य, ततो द्वारेषु कमलश्वेतइन्द्रमायरक्तकृष्णनीलमेघपीतपद्मवर्णाः पताकाश्च दत्त्वा मध्ये श्वेतचित्रे वा ध्वजे सम्पूज्य पाश्चात्यद्वारेण प्रविशेत्। ततः पश्चिमायां पूर्वाभिमुखो वा मण्डपनिरीक्षणप्रेक्षणताडनाभ्युक्षणावकिरणपूरणसमीकरणसेवनाकुट्टनसन्मार्जनोपलेपनाचक्रीकरणान्तैः कर्मभिः स्वस्वमन्त्रोपेतैः संस्कृत्य चन्दनच्छटाभिः सम्प्रोक्ष्योज्ज्वलस्वच्छभूतान्विचिन्तयन्[2] विनिक्षिप्य पुनस्तान् दर्भकूर्चिकया समाहृत्य[3] मण्डपस्य मध्ये यवाङ्कुरोपशोभितां[4] छत्रचामरभृङ्गारकलशध्वजदर्पणव्यजनसुप्रतीकाष्टमङ्गलकान्वितां वेदीं संस्थाप्य ततो वासुकिनिर्मोकलघुनी प्रत्यग्रवाससी दधानः कराङ्गुलीविन्यस्तकाञ्चनमुद्रिकः प्रकोष्ठदेशनियोजितकनककङ्कणः तपसा विशुद्धदेहो वेदिकायामुदङ्मुखमुपविश्य भूतशुद्धिं विधाय सकलीकरणार्घपात्रं कृत्वा इन्द्रादीनां कवचं विधाय सत्पुष्पाक्षतगन्धधूपपक्वान्नमनोहरं सर्वविघ्नशान्तये स्वयमाचार्य इन्द्रादिमूर्तिधरैः सह सर्वासु दिक्षु बलिं प्रक्षिप्य क्षेत्राधिपं पुष्पधूपाक्षतनैवेद्यदीपादिना सम्पूज्य हस्तौ

---

१ स्नीग इति क. पाठः। २ विचिन्तयित्वा इति पाठः। ३ समधृत्य इति ख. ग. पाठः। ४ यवारोप इति ग. पाठः।

पादौ च प्रक्षाल्य कृताचमनो वेदिकायामुपविश्य पञ्चवर्णेन रजसा स्वर्णवाहनायुधालङ्कृतान् लोकपालान् संलिख्य दधिदूर्वाक्षतादिभिर्वाहनायुधसमन्वितान् सम्पूज्य अनन्तरं मण्डपाद् बहिः कुमुदाञ्जनचमरपुष्पदन्ताभिधानान् क्षेत्रपालान् पूजयेत् । ततो हेमाद्येकतमं कुम्भमानीय गालिताम्भसा प्रपूर्य संहृतविकारेष्वासनं दत्त्वा तत्र मूर्तिरूपं कुम्भं विन्यस्य साङ्गं जिनेशं सम्पूज्य पूर्वद्वारि प्रशान्तशिशिरौ । दक्षिणे पर्जन्याशोकौ । पश्चिमे भूतसंजीवनामृतौ । उत्तरे धनेशश्रीकुम्भौ सवस्त्रौ स्रक्सूत्रकण्ठौ सहिरण्यौ चूताश्वत्थदलभूषितवक्त्रौ बीजपूरादिफलसहितौ नन्द्यादिद्वाराधिष्ठितौ सम्पूज्य यथाक्रमं स्वस्वदिक्षु इन्द्रादिधरणेन्द्रान्तं लोकपालाधिष्ठितं कुम्भदशकम् ततोऽखण्डधारया भृङ्गारेण सह कुम्भमाभ्राम्य भो भोः शक्र यथा स्वस्यां दिशि विघ्नप्रशान्तये सावधानेन स्नानान्तं यावद्भवितव्यमिति । अनेन क्रमेण लोकपालान् सम्बोध्य । ततः स्नानमण्डपं दुग्धदधिसर्पिश्चन्दनं कुङ्कुमं सुमनसो धूपं तथा रत्नानि मृत्तिकाः कषायादिकं प्रतिष्ठोपयोगकारकव्रातं तथा रत्नफलसस्यौषधीअष्टवर्गादिसंज्ञकान् कुम्भान्विन्यस्य अस्त्रप्रोक्षितान् कवचावगुण्ठितान् स्वसंज्ञाभिरभ्यर्च्य क्षीरदधिसर्पिरिक्षुसमुद्ररूपान् परिकल्प्य बहिरन्यानपि कुम्भान् संस्थाप्य लोकपालायुधाङ्कितं शिलानवकं पञ्चकं वा तासु कलशोपेतं समानीय स्नानमुपक्रमेत् । सप्तधान्येन रत्नसमूहेन मृद्भिः कषायवर्गेण मूलिकाभिरष्टवर्गेणोदकान्तरचन्दनेन तीर्थाम्भोभिः पञ्चगव्यादिना संस्नाप्य रक्तवस्त्रैराच्छाद्य मण्डपं

१ सवस्त्रौ सूत्र इति ख. ग. पाठः ।

प्रदक्षिणीकृत्य पाश्चात्यद्वारेण प्रवेश्य वेदिकायां संस्थाप्य अधिवासनामन्त्रेणाधिवास्य पुष्पवासधूपादिभिः समभ्यर्च्य मुद्रान्यासं कृत्वा धर्माभिजस्रवाससा संच्छाद्य नैवेद्यं दत्त्वा अर्हदादीनि पञ्च तत्त्वानि विन्यस्य क्ष्माप्तेजोवाताकाशगन्धरसरूपस्पर्शशब्दोपस्थपायुपादपाणिवाक्नासिकाजिह्वाचक्षुस्त्वक्श्रोत्रमनोऽहङ्कारबुद्धय इति निष्ठुरया संनिरोध्य शिलां पूजयेत्। पूर्वादिशिलासु च तत्त्वानि सर्वाणि विन्यस्य निरोध्य पूजयेत् ॥

अथ शिलाकुम्भनामानि–नन्दा भद्रा जया रिक्ता चेति हस्तप्रमाणा अष्टाङ्गुलोच्छ्रिताः स्वस्तिकाङ्किताः शैलमये शैलमयाः इष्टिकामये तन्मयाः पद्म–महापद्म–शङ्ख–मरकत–समुद्राख्याः कुम्भा इति पञ्चमूर्तिपक्षः। नवपक्षे तु सुभद्र–विभद्र–सुदन्त–जय–विजय–पूर्व–उत्तर–संज्ञकाः शिलाः। सुनन्दा भद्रा जया पूर्णा अजिता विजया मङ्गला धरणीसंज्ञकाः मध्यस्था ब्रह्मरूपिणीति। ततः शिलां कुम्भांश्चादाय प्रासादस्थानमागत्य गर्तासु ॐअर्हं जिनाय नमः इति मध्यमगर्तायां कुम्भं विन्यस्य लग्नकाले सिद्धशक्तिं विन्यस्य संचिन्त्य ॐह्रीं जिनाय स्वाहेति मन्त्रमुच्चार्य नमस्कारेण शिलां निवेशयेत्। ततः पूर्वादिगर्तासु सिद्धानां शक्तिं विन्यस्य तदनन्तरं। ॐलूं इन्द्राय नमः। ॐरूं अग्नये नमः। ॐसूं यमाय नमः। ॐपूं नैर्ऋतये नमः। ॐवूं वरुणाय नमः। ॐगूं वायवे नमः। ॐयूं कुबेराय नमः। ॐहूं ईशानाय नमः। ॐनागाय नमः। ॐब्रह्मणे नमः इति लोकेशमन्त्रैस्ताम्रमयकुम्भान् घृतमधुपूरितान् कृतस्रक्सूत्रकण्ठान् विन्यस्य तेषामुपरि शिलाः सं-

---

१ हस्ता अष्टाङ्गुल इति ख. पाठः। २ संतकाः शिला इति ख. पाठः। ३ ॐह्रीं इति ख. पाठः। ४ ॐल्लूं इत्यन्यत्र पाठः।

स्थाप्य धर्मादिचतुष्कं अधर्मादिचतुष्कं च शिलानामधिष्ठायकत्वेन विन्यस्य विशेषतः पूजां विधाय ततः संघादिकं पूजयेदिति । पादकास्ते तु संकल्पाः प्रासादस्य तु देशिकैः । सिद्धशक्तिं तु संयोज्य व्योमप्रासादमध्यगाम् ॥ इति पादप्रतिष्ठा प्रथमा ॥

## ॥ अथ द्वारप्रतिष्ठाविधिः ॥

तत्र पूर्ववत् द्रव्यव्रातमाहृत्य द्वारपालपूजादिकं कर्म कृत्वा द्वाराङ्गानि कषायादिभिः संस्नाप्य रक्तयुगया संछाद्य मण्डपमध्ये वेदिकायामारोप्य अथ औदुम्बर आयान्तं क्ष्मापतेजोवाताकाशगन्धरसस्पर्शशब्दोपस्थपायुपादपाणिवाक्घ्राणजिह्वाचक्षुस्त्वक्श्रोत्रमनोहङ्कारबुद्धिरागविद्याकलानियतिकालमायेति तत्र व्रातमारोप्य गन्धपुष्पाक्षतादिभिः सम्पूज्य स्वमन्त्रेणाधिवास्य द्वारदेशे वास्तुं सम्पूज्य रत्नादिपञ्चकं विन्यस्य प्रणवासनं दत्त्वा सूरिः स्वमन्त्रेण लग्नवेलायां द्वारं विन्यस्य यवसिद्धार्थकक्रान्ता[1]ऋद्धिवृद्ध्यमृतमोहनागोशृङ्गमृद्वरोत्पलकुष्ठतिलाभिषवलक्ष्मणारोचनासहदेवी[2]दधिदूर्वेति द्रव्यसमूहं विचित्रकार्पटे बद्ध्वा ऊर्ध्वोदुम्बरे यक्षेशश्रियं चात्मनो दक्षिणवामशाखयोः कालगङ्गे महाकालयमुने विन्यस्येदिति देवताषट्कं जिनाज्ञया संनिरोध्य दूर्वादध्यक्षता[3]दिभिः सम्पूजयेत् । पूर्ववत् शान्तिबलिं दत्वा भगवन्तं सम्पूज्य सङ्घं प्रपूजयेत् ॥ इति द्वारप्रतिष्ठा द्वितीया ॥

१ कान्ता इति ग. पाठः । २ सहदेवा इति ख. पाठः । ३ दूर्वाक्षतादिभिः इति ख. पाठः ।

## ॥ अथ विम्बप्रतिष्ठाविधिः ॥

तत्र पूर्ववत् मण्डपद्वयं कृत्वा कारकसमूहमाहरेत् । सुवर्णरजतताम्रमयं मृन्मयं वा स्नानार्थं कलशाष्टकम् । आम्रकुम्भचतुष्कम् । वारकाणामष्टोत्तरशतं चतुरङ्गो वेदी मल्लकानां पञ्चाशत् वेणुयववारकान् शरावप्ररूढांश्च स्थपतिकुम्भं यवव्रीहिगोधूमतिलमापमुद्गवल्लचणकमसूरतुवरीवणबीजनीवारश्यामकादिधान्यवर्गः ॥ १ ॥ हेमरजतताम्रकृष्णलोहत्रपुरीतिवज्रसूर्यकान्तनीलमहानीलमौक्तिकपुष्परागपद्मरागवैडूर्यादिरत्नवर्गः ॥ २ ॥ हेमरजतताम्रकृष्णलोहत्रपुरीतिकाकांस्यसीसकादिलोहवर्गः ॥ ३ ॥ न्यग्रोधोदुम्बराश्वत्थचम्पकाशोककदम्बाम्रजम्बूवकुलार्जुनपाटलावेतसकिंशुकादिकपायवर्गः ॥ ४ ॥ वल्मीकपर्वताग्रनद्युभयतटमहानदीसंगमकुशबिल्वमूलचतुष्पथदन्तिदन्तगोशृङ्गराजद्वारपद्मसरएकवृक्षादिमृत्तिकावर्गः ॥ ५ ॥ गङ्गायमुनामहीनर्मदासरस्वतीतापीगोदावरीसमुद्रपद्मसरस्ताम्रपर्णीनदीसङ्गमादिपानीयवर्गः ॥ ६ ॥ सहदेवीजयाविजयाजयन्तीअपराजिताविष्णुक्रान्ताशङ्खपुष्पीवलाअतिबलाहेमपुष्पीविशालानाकुलीगन्धनाकुलीसहवाराहीशतावरीमेदामहामेदाकाकोलीक्षीरकाकोलीकुमारीबृहतीद्वयं चक्राङ्कामयूरशिखालक्ष्मणादूर्वादर्भपतंजारीगोरम्भारुद्रजटालज्जालिकामेषशृङ्गीऋद्धिवृद्ध्याद्यौषधिवर्गः ॥७॥ प्रियङ्गुवचारोध्रयष्टीमधुकुष्ठदेवदारुउशीरऋद्धिवृद्धिशतावरीप्रभृत्यष्टकवर्गः ॥ ८ ॥ वालकामलकजातिपत्रिकाहरिद्राग्रन्थिपर्णकमुस्ताकुष्ठादिसर्वौषधिवर्गः ॥ ९ ॥ सिल्हककुष्ठकमांसीमुरमांसीश्रीखण्डागुरुकर्पूरनखपूतिकेशादिगन्धवर्गः ॥ १० ॥ वासाश्रीखण्डकुङ्कुमकर्पूरमुद्रिकाकङ्कणमदनफलानि रक्तसूत्रं ऊर्णासूत्रं लोहमुद्रिका

ऋद्धिवृद्धियुतं कङ्कणं यवमालिका[1]तर्कुका शिलागोरोचनाश्वेतसर्षपासितयुगाद्वयं पट्टाच्छादनं पटलकानि घण्टाः धूपदहनकानि रजतवट्टिकां[2] सुवर्णशलाकां कांस्यवट्टिकां आदर्शः नालिकेरबीजपूरककदलकनारङ्गाम्रजम्बूकूष्माण्डवृन्ताकामलकबदरादिप्रशस्तफलवर्गः । पूगीफलनागवल्लीदलानि मातृपुटिकानां शतमष्टोत्तरम् । अखण्डतण्डुलानां सेतिका इक्षुयष्टिका पुष्पाणां चय इति प्रचुरमानीयोत्तमवेदिकायां कारकजातं विन्यस्य हस्तशतप्रमाणायां भुवि जीवरक्षादिना क्षेत्रशुद्धिं विदध्यात् । तथाचोक्तम् ॥ काउं[3] खेत्तविसुद्धिं मङ्गलकोउयजुयं मणभिरामम् । वत्थुं जत्थ पइट्ठा कायव्वा वीयरायस्स ॥ १ ॥ इति तदनु पूर्ववत् मण्डपप्रदेशं विधाय ततो मङ्गलार्थमादौ चैत्यवन्दनं शान्त्यर्थं देवतानां च कायोत्सर्गाणि कृत्वा तदनु वेदिकायामुपविश्य ॐनमो अरिहंताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमोलोएसव्वसाहूणं ॐनमोसव्वोसहिपत्ताणं ॐनमोविज्जाहराणं ॐनमो आगासगामीणं ॐ कं क्षं नमः अशुचिः[4] शुचिर्भवामि स्वाहेति पञ्चसप्तवारान् सुरभिमुद्रया शुचित्वापादनायात्मनि शुचिविद्यां विन्यस्य श्रीमदर्हदादिमन्त्रैरात्मनो रक्षां कुर्यात् । तथाचागमः ॥ सुइ[5]विज्जाए सुइणा पंचंगावद्धपरियरेण चिरा । निसिऊण जहाठाणं दिसि देवयमाइए सव्वे ॥ १ ॥ एवं सन्नद्धगत्तो य सुइ दक्खो जिइंदिओ । सियवत्थपाउरंगो पोस-

१ मालिकाशिला इति ग. पाठः । २ पट्टिकां इति ग. पाठः । ३ कृत्वा क्षेत्रविशुद्धिं मङ्गलकौतुकयुतं मनोभिरामम् । वस्तु यत्र प्रतिष्ठा कर्तव्या वीतरागस्य ॥ १ ॥ ४ अशुचिं इति क. पाठः । ५ शुचिविद्यया शुचिना पंचंगाबद्धपरिकरेण चिरात् । न्यस्य यथास्थानं दिशि देवतादिकाः सर्वे ॥ १ ॥ एवं संनद्धगात्रश्च शुचिर्दक्षो जितेन्द्रियः । सितवस्त्रप्रावृताङ्गः पौषधिकः करोति च प्रतिष्ठाम् ॥ २ ॥

हिओ कुणइ अ पइट्ठम् ॥ २ ॥ ततश्च श्रद्धायुक्तं शुचितपसा शुद्धदेहं शेखरकटककेयूरकुण्डलमुद्रिकाहारवैक-क्षादिषोडशाभरणोपेतं देवस्य दक्षिणभुजाश्रितमिन्द्रं परिकल्पयेत्। उक्तंच । उइयदिशासु विणिवेसियस्स दक्खिणभुयाणुमग्गेण । उत्तमसियवत्थविनसिएणं कयसुकयकम्मेणं ॥ १ ॥ तदनन्तरमिन्द्रस्य मन्त्रमयं कवचं कृत्वा ॐनमोअरिहन्ताणं नमोसिद्धाणं नमोआयरियाणं नमोआगासगामीणं नमोचारणाइलद्धीणं जे इमे किंनरकिंपुरिसमहोरगगरुलसिद्धगन्धव्वजक्खरक्खसभूयपिसायडाइणिपभइ जिणघरणिवासिणो नियनिय-निलयट्ठिया य वियारिणो सन्निहिया य असन्निहिया य ते सव्वे विलेवणपुप्फधूवपईवसणाहं बलिं पडिच्छन्तु तुट्ठिकरा भवन्तु सिवंकरा भवन्तु सन्तिकरा भवन्तु सत्थयणं कुणन्तु सव्वजिणाणं संनिहाणं भावओ पसन्न-भावेण सव्वत्थ रक्खं कुणंतु सव्वदुरियाणि नासन्तु सव्वासिवं उवसमन्तु सन्तिपुट्ठितुट्ठिसिवसत्थयणकारिणो भव-न्तु स्वाहेत्यादिमन्त्रेण विघ्नोच्चाटनाय भूतबलिं प्रक्षिपेत् । ततः प्रतिमाकोणेषु स्रक्सूत्रफलान्वितान् चतुःकुम्भान् संस्थाप्य ॐह्रां ललाटे । ॐह्रीं वामकर्णे । ॐह्रूं दक्षिणकर्णे ॐह्रौं शिरसि पश्चिमभागे । ॐह्रः मस्तकोपरि । ॐक्ष्मां नेत्रयोः । ॐक्ष्मीं मुखे । ॐक्ष्मूं कण्ठे । ॐक्ष्मौं हृदये । ॐक्ष्मः बाह्वोः । ॐक्रों उदरे । ॐह्रीं कट्यां । ॐह्रूं जङ्घयोः । ॐक्ष्मूं पादयोः । ॐक्ष्मः हस्तयोरिति कुङ्कुमश्रीखण्डकर्पूरादिना चक्षुःप्रतिस्फोटादिनिवारणाय प्रति-

---

१ उचितदिशासु विनिवेशितस्य दक्षिणभुजानुमार्गेण । उत्तमसितवस्त्रविन्यसितेन कृतसुकृतकर्मणा ॥१॥ २ रगहुलइति ख. पाठः । ३ सिवकरा इति क. पाठः । ४ क्षीं पाठान्तरम् । ५ ह्रूं पाठान्तरम् । ६ ह्रूं पाठान्तरम् । ७ अः पाठान्तरम् ।

मायां विलिखेत् । तदनु ॐ हूं क्ष्रूं फुट् किरिटि किरिटि घातय घातय परविघ्नानास्फोटयास्फोटय सहस्रखण्डान् कुरु कुरु परमुद्रां छिन्द छिन्द परमन्त्रान् भिन्द भिन्द क्षः फट् स्वाहेत्यनेन श्वेतसर्षपान् परिक्षिप्य दिग्बन्धाय पूर्वादिकाष्ठासु विनिक्षिप्य तदनु चाचार्यश्चतुरः कलशान् गालिताम्भसा प्रपूर्य पुष्पाक्षतादिभिः सम्पूज्य मन्त्रैरालभ्य स्थपतिं च वस्त्रालङ्कारताम्बूलादिना संपूज्य मुद्रितं कलशं समर्प्य शेषांश्चेन्द्रादीनां समर्प्येष्टांशसमये सूत्रधारकलशपुरःसरां प्रतिमां स्नापयेत् । इति प्रथमं कलशस्नानम् ॥ ततः सप्तधान्यरत्नमृत्तिकाकषायौषधिअष्टवर्गसर्वौषधिपञ्चामृतगन्धवासचन्दनकुङ्कुमकर्पूरतीर्थोदकादियुक्तैः स्वस्वमुद्राभिमन्त्रितैः कुम्भैः स्नापयेदिति ॥ अत्र स्नानमन्त्राः । ॐ नमो यः सर्वशरीरावस्थिते महाभूते आङजलं गृह्ण गृह्ण स्वाहेति प्रथमस्नानषट्कस्यायं मन्त्रः । ॐ नमो यः सर्वशरीरावस्थिते पृथु विपृथु विपृथु गन्धं गृह्ण गृह्ण स्वाहेत्यष्टवर्गादिस्नानसमूहस्यायं मन्त्रः । ॐ नमो यः सर्वशरीरावस्थिते मेदिनि पुरु पुरु पुष्पवति पुष्पं गृह्ण गृह्ण स्वाहेति समस्तस्नानानां पुष्पमन्त्रोऽयम् । ॐ नमो यः सर्वशरीरावस्थिते दह दह महाभूते तेजोधिपतये धूपं गृह्ण गृह्ण स्वाहेति समस्तस्नानानां धूपमन्त्रोऽयम् । तदेवमाकारशुद्धिं विधाय परमेष्ठिमुद्रया प्रतिमायां भगवन्तमावाहयेत् । ॐ नमोऽर्हत्परमेश्वराय चतुर्मुखपरमेष्ठिने त्रैलोक्यनताय अष्टदिक्कुमारीपरिपूजिताय देवाधिदेवाय दिव्यशरीराय त्रैलोक्यमहिताय आगच्छ[1] आगच्छ स्वाहा । ततोऽभिमन्त्रितचन्दनेन प्रतिमां सर्वाङ्गां समालिप्य[2] अञ्जलिमुद्रया पुष्पाण्यधिरोप्य धूपं चोद्ग्राह्य वासान् प्रक्षिप्य

१ आगच्छ २ इत्यन्यत्र । २ समालभ्या क. ख. पाठः ।

श्वेतवाससा प्रच्छाद्य मूलमन्त्रेण संपूज्य हृदये संस्थाप्य मण्डपं प्रदक्षिणीकृत्य हिरण्यकांस्यवसुरक्षकरम्यकप-
र्दकप्रक्षेपपूर्वकं नीत्वा मण्डपाग्रे हृदये रथात्समुत्तार्य पश्चिमद्वारेण मण्डपं प्रवेश्य भद्रपीठे संस्थाप्य अग्रतः
पीठिकायां नन्दावर्ताख्यमण्डले मन्त्रान् सम्पूजयेत् । तत्र चन्दनानुलिप्ते श्रीपर्णीफलके पूर्ववत् चतुरस्रं क्षेत्रं
संसाध्य ब्रह्मस्थानात् सूत्रभ्रमेण सप्तवृत्तानि कृत्वा प्रथमवृत्ते तद्वृत्तप्रमाणां कर्णिकां तन्मध्ये नवकोणं नन्दावर्तं,
पूर्वादिदिक्षु वज्रयवाङ्कुशसुमनोदामानि च लिखित्वा । ततो द्वितीयवृत्ते मूलमध्याग्रेषु शुक्लरक्तपीतं केसरजालं
चतुर्विंशतिमातृयुतं तृतीयादिवृत्तेषु चतुर्विंशतिषोडशाष्टपत्रसंख्यया क्रमेण पद्मानि च निष्पाद्य आग्नेयनैर्ऋ-
तवायव्यैशानासु द्वादशगणान्विलिखेत् । बहिश्चतुर्द्वारान्वितं प्राकारत्रयं श्रीशान्तिभूतिबलारोग्यसंज्ञकैस्तो-
रणैरलङ्कृतं धर्ममानगजसिंहध्वजैः समन्वितमालिख्यानन्तरं प्रथमप्राकारपूर्वादिद्वाराभ्यन्तर उभयपार्श्वे कन-
कपीतसितारक्तकृष्णवर्णानि वैमानिकव्यन्तरज्योतिष्कभवनपतिदेवानां युगलानि प्रथमप्राकारद्वारपालान्
खड्गदण्डधनुःपरशुसमन्वितान् सोमयमवरुणकुबेराख्यान्मध्ये च यष्टिहस्तं तुम्बुरुदेवं विलिख्य । ततो द्वितीय-
प्राकारद्वारेषु जया विजया अजिता अपराजिताभिधाना द्वारपालीः । तृतीयप्राकारद्वारेषु तुम्बुरुं चाभिलिख्य तदनु
द्वितीयप्राकारान्तरे तिरश्चः तृतीयप्राकारान्तरे वाहनानि बाह्यभूमौ मनुष्यदेवानालिख्य । चतुर्द्वारोभयपार्श्वेषु
पद्मिनीखण्डमण्डिताः पुष्करिणीर्विलिखेत् । ततो वज्रलाञ्छितमिन्द्रपुरं दत्वा दिक्षु परविद्याक्षः फुट् कोणेषु परमं-

१ कर्णिकान्तर्मध्ये इति ख. पाठः । २ नन्द्यावर्तं इति पाठः । ३ तंबुरुं क. तुंबरुं इति पाठः । ४ तिरि—तृतीय इति क. पाठौ ।

त्रा क्षः फुट् चतुःकोणेषु पद्मासनानि समारोप्य पद्मपिधानांश्चतुरो मङ्गलकलशान् लिखित्वा बाह्ये वायुभवनं दद्यात्। इत्येतत्सर्वं कर्पूरगोरोचनामृगमदमिश्रेण कुङ्कुमरसेन काञ्चनतूलिकया सन्मण्डलं विलिखेत्। तदनु तन्मध्यकर्णिकायां भगवन्तमावाह्य पुष्पाक्षतचन्दनादिभिः सम्पूज्य पूर्वपश्चिमदक्षिणोत्तरासु सिद्धादिचतुष्कं आग्नेयनैर्ऋतवायव्यैशानेषु ज्ञानादिचतुष्कं च पूजयेत्। ततो दक्षिणभागे देवस्य शक्र[1]श्रुतदेवते उत्तरतश्चेशानशान्तिदेवते सम्पूज्य केसरेषु मातृगणं प्रणवादिनमोन्तं सम्पूजयेत्। तदनु पत्रेषु जयादिदेवताचतुष्टयमाग्नेयादिषु जम्भादिदेवतागणं बहिश्चतुर्विंशत्यब्जपत्रेषु लोकान्तिकदेवतागणं अनन्तरषोडशपत्रेषु विद्याषोडशकमभ्यर्च्य। उपरि[2]तनपद्मद्वये क्रमेण वैमानिकदेवान् सदेवीकान् दिक्पालांश्च सम्पूज्य ततो द्वादशगणादिकमशेषमपि देवतागणं मण्डलध्वजतोरणादिकं च पुष्पाक्षतादिभिरभ्यर्चयेत्। तथाचोक्तम्। *मज्झे य नसेयव्वं नन्दावज्जं जवं कुसं सुमणम्। तस्सोवरि ठविज्जा पडिमा देवस्स इत्था(च्छा)ए ॥१॥ मज्झे निरञ्जणजिणो पुं[3]वावरदाहिणोत्तरदिसासु। तह सिद्धसुरुवज्झायसाहूसुति(इ?)रयणतियनासो ॥२॥ केसरनिलये तह मायरो य [1]मरुदेवि वि[4]जये सेणा[3] य। सिद्धत्था[4] तह

1 शक्तश्रुत इति क. पाठः। 2 उपरिपद्म इति क. पाठः। 3 पुवेवर इति ग. पाठः। 4 विजयमाणाय इति क. पाठः।

* मध्ये च न्यासयितव्यं नन्दा( वर्त )वर्ज्यं यवमङ्कुशं सुमनः। तस्योपरि स्थापयेत् प्रतिमां देवस्य इच्छायाः ॥ १ ॥
मध्ये निरञ्जनजिनः पूर्वापरदक्षिणोत्तरदिशासु। तथा सिद्धसूर्युपाध्यायसाधुशुचिरत्नत्रयन्यासः ॥ २ ॥
केसरनिलये तथा मातरश्च मरुदेवी विजया सेना च। सिद्धार्था तथा मङ्गला सुसीमा पृथ्वी च लक्ष्मणा ॥ ३ ॥

मङ्गलैसुसीमैपुहवीयलक्खणया ॥ ३ ॥ रामो नन्दा विण्हू जेयसामा सुजसं सुवया अइरा । सिरिदेवीय पहा-
वइ तत्तो पउमावई वप्पा ॥ ४ ॥ सिवं वम्मा तिसलाविय मायाए नामरूवा उ । ॐनमो पुव्वं अन्ते साह त्ति
तओ य वत्तव्वम् ॥ ५ ॥ लोयंतियदेवाणं तत्तो चउवीसपरिगणो नमिउं । सगमंतेहिं विहिणा सोलसविज्जा-
गणो य तओ ॥ ६ ॥ पुव्वोत्तराइ(सु)रोहिणीपन्नत्ती वज्जसंकला तह य । वज्जंकुशीय अप्पडिचक्का तह पुरिसदत्ता य
॥ ७ ॥ काली य महाकाली गौरी गंन्धारी जालमाला य । माणवि वइरोट्टाऽच्छुत्ता माणसि महामाणसी चेव
॥ ८ ॥ वेमाणिया य देवा तओ य चउविहा सदेवीया । इंदाइ दिसाइवई नसेज्ज नियएहिं मंतेहिं ॥ ९ ॥
दारे य ठाइ सोमो यमवरुणोय तह कुबेरोय । हत्थेसुं यं रइउं धणुदण्डपासगयगाहिणो तहय ॥ १० ॥

---

रामा नन्दा विष्णुर्जया श्यामा सुयशाः सुव्रता अचिरा । श्री देवी च प्रभावती ततः पद्मावती वप्रा ॥ ४ ॥

शिवा वामा त्रिशलापि च मातॄणां नामरूपापि तु । ॐनमः पूर्वं अन्ते स्वाहेति ततश्च वक्तव्यम् ॥ ५ ॥

लोकान्तिकदेवानां ततश्चतुर्विंशतिपरिगणं नत्वा । स्वमन्त्रैर्विधिना षोडशविद्यागणश्च ततः ॥ ६ ॥

पूर्वोत्तरादिषु रोहिणी प्रज्ञप्तिर्वज्रशृङ्खला तथाच । वज्राङ्कुशी च अप्रतिचक्रा तथा पुरुषदत्ता च ॥ ७ ॥

काली च महाकाली गौरी गन्धारी ज्वालामाला च । मानवी वैरोट्या अच्छुप्ता मानसी महामानसी चैव ॥ ८ ॥

वैमानिकाश्च देवास्ततश्च चतुर्विधाः सदेवीकाः । इन्द्रादिदिशाधिपतीन्न्यसेत् निजैर्मन्त्रैः ॥ ९ ॥

द्वारे च तिष्ठति सोमः यमो वरुणश्च तथा कुबेरश्च । हस्तेषु च रचयित्वा धनुर्दण्डपाशगदाग्राहिणस्तथाच ॥१०॥ १ वर इति प्रत्यन्तरे पाठः।

सक्को य जिणासन्नो णाणादेवा जहोइया वारे। पडिहारोविय तुंबरु मंतोय णमो तओ साहा ॥११॥ एवं नसिउं सव्वं पुज्जेउं विविहगन्धमल्लेहिं । नसियव्वो पञ्चंगो मंतो पडिमा य जत्तेणं ॥ १२ ॥ इति। अथ नन्दावर्त्तपूजामन्त्राः। ॐनमो अर्हते जिनाय रजोहननायाऽघोरस्वभावाय निरतिशयपूजार्हाय अरुहाय भगवते ह्रां अर्हत्परमेष्ठिने स्वाहा। ॐनमः स्वयम्भुवे अजराय मृत्युंजयाय निरामयाय अनिधनाय भगवते निरञ्जनाय ह्रीं सिद्धपरमेष्ठिने स्वाहा। ॐनमः पञ्चविधाचारवेदिने तदाचरणशीलाय तत्प्रवर्तकाय ह्रूं आचार्यपरमेष्ठिने स्वाहा। ॐनमो द्वादशाङ्गपरमस्वाध्यायसमृद्धाय तत्प्रदानोद्यताय ह्रौं उपाध्यायाय ब्रह्मणे स्वाहा। ॐनमः स्वर्गापवर्गसाधकाय ह्रः साधुमहात्मने स्वाहा ॥ पञ्चपरमेष्ठिपूजामन्त्राः। ॐनमः परमाभ्युदयनिःश्रेयसहेतवे ज्ञानाय नमः। रत्नत्रयादीनां मन्त्राः। ॐनमः शुचित्वापादिकायै शुचिविद्यायै स्वाहा। ॐनमः सौधर्मकल्पोत्तरस्थितये ऐरावतवाहनाय वज्रपाणिशचीपतिविबुधाधीशभास्वत्किरीटप्रच्युतिसमनन्तरापवर्गभाक्शक्राय स्वाहा। ॐनमो दक्षिणपार्श्वासीनधवलमूर्तिवरदपद्माक्षसूत्रपुस्तकालङ्कृतानेकपाणिद्वादशाङ्गश्रुतदेवाधिदेवते सरस्वत्यै स्वाहा। ॐनमो ईशानकल्पोत्तरस्थितये गजवाहनसदेवीकदिव्यायुधपाणिदेवाधीशकनककिरीटोद्भासिने ईशानाय स्वाहा। ॐनमो

शक्रश्च जिनासन्नो नानादेवा यथोदिता द्वारे। प्रतिहारोपि च तुम्बरुः मन्त्रश्च नमस्ततः स्वाहा ॥ ११ ॥

एवं न्यस्य सर्वं पूजयित्वा विविधगन्धमाल्यैः। न्यासयितव्यः पञ्चाङ्गो मन्त्रः प्रतिमा च यत्नेन ॥ १२ ॥

१ देवादिदेव इति ग. पाठः। २ मरुदेवीक इति ख. पाठः।

ग्रामपार्श्वासीनधवलद्युतिवरदकमलपुस्तककमण्डलुभूपितानेकपाणिसकलजनशान्तिकारिके शान्तिदेव्यै स्वाहा।
ॐनमो दिव्यरत्नात्मने नन्दावर्ताय स्वाहा । ॐनमः सर्वरक्षाविधायिने वज्राय स्वाहा । ॐनमो जयाभ्युदया-
त्मने यवाय स्वाहा । ॐनमः समस्तविघ्नविनाशकाय अङ्कुशाय स्वाहा । ॐनमो मङ्गलात्मने सुमनोदामाय
स्वाहा । इति शक्रादीनां मन्त्राः । ॐनमो मरुदेव्यै सपुत्रिकायै स्वाहा । इत्यादिमातृकादिगणमन्त्राः ।
ॐनमः पूर्वोत्तरादिग्निवासिभ्यः सारस्वतेभ्यः स्वाहा ॥ १ ॥ ॐनमः पूर्वदिग्निवासिभ्य आदित्येभ्यः स्वाहा
॥ २ ॥ ॐनमः पूर्वदक्षिणदिग्निवासिभ्यो वह्निभ्यः स्वाहा ॥३॥ ॐनमो दक्षिणदिग्निवासिभ्यो वरुणेभ्यः स्वाहा
॥ ४ ॥ ॐनमो दक्षिणापरदिग्निवासिभ्यो गर्दतोयेभ्यः स्वाहा ॥ ५ ॥ ॐनमो अपरदिग्निवासिभ्यस्तुषिते-
भ्यः स्वाहा ॥ ६ ॥ ॐनमो अपरोत्तरदिग्निवासिभ्योऽव्याबाधेभ्यः स्वाहा ॥७॥ ॐनम उत्तरदिग्निवासिभ्यो
ऽरिष्टेभ्यः स्वाहा ॥८॥ ॐनमः सारस्वतादित्यान्तरनिवासिअग्न्याभ ॥ ९ ॥ सूर्याभेभ्यः स्वाहा ॥ १० ॥ ॐनमः
आदित्यवह्न्यन्तरनिवासिचन्द्रायस्वाहा ॥ ११ ॥ सत्याभेभ्यःस्वाहा ॥ १२ ॥ ॐनमोवह्निवरुणान्तरनिवासिश्रेयस्कर
॥ १३ ॥ क्षेमंकरेभ्यः स्वाहा ॥ १४ ॥ ॐनमोवरुणगर्दतोयान्तरनिवासिवृषभाभ [1] ॥ १५ ॥ कामचारेभ्यः [2] स्वाहा
॥ १६ ॥ ॐनमो गर्दतोयतुषितान्तरनिवासिनिर्माणराजो ॥ १७ ॥ दिशान्तरक्षितेभ्यः स्वाहा ॥ १८ ॥ ॐन-
मस्तुषिताव्याबाधान्तरनिवास्यात्मरक्षित ॥ १९ ॥ सर्वरक्षितेभ्यः स्वाहा ॥ २० ॥ ॐनमो अव्याबाधारिष्टान्तर-

---

१ तोयोन्तर इति ख. ग. पाठः । २ कामवरेभ्य इति ख. पाठः ।

निवासिमरु ॥ २१ ॥ वसुभ्यः स्वाहा ॥ २२ ॥ ॐनमो अरिष्टसारस्वतान्तरनिवास्यश्च ॥ २३ ॥ विश्वेभ्यः स्वाहा ॥ २४ ॥ एते चतुर्विंशतिनिकाये लोकान्तिकदेवानां पूजामन्त्राः ॥ ॐनमः पूर्वदिग्दलासीनइन्दुधवलविग्रहशङ्ख-कार्मुकादिप्रहरणानेकपाणिरोहिण्यै स्वाहा ॥ ॐनमः पूर्वदिग्दलान्तरासीनकुवलयद्युतिदेहशक्त्यादिप्रहरणानेक-पाणिप्रज्ञप्तिकायै स्वाहा। ॐनमः पूर्वदक्षिणदिग्दलासीनहेमावदाततनुलोहशृङ्खलाद्यायुधविविधकरवज्रशृङ्खलायै स्वाहा। ॐनमः पूर्वदक्षिणदिग्दलान्तरासीनकनककान्तिमूर्तिवज्राङ्कुशकुन्तादिशस्त्रबहुभुजभीममहावज्राङ्कुशायै स्वाहा। ॐनमः दक्षिणदिग्दलासीनजाम्बूनदाभविशुद्धशरीरवचश्चचक्रवज्राद्यलङ्कृतानेककराप्रतिचक्रायै स्वाहा। ॐनमः दक्षिणदिग्दलान्तरासीनसुवर्णवर्णमूर्ति–सितनिवसनाद्यनेकहेतिप्रायबाहुपुरुषदत्तायै स्वाहा । ॐनमो दक्षिणापरदिग्दलासीनस्निग्धाञ्जननिभतनुगदाद्यायुधाद्यनेककरकलितकालिकायै स्वाहा। ॐनमो दक्षिणापरदि-ग्दलासीनातसीकुसुमकान्तिमूर्तिवज्राद्यायुधानेककर्ममहाकालिकायै स्वाहा। ॐनमो अपरदिग्दलासीनकनक-कान्तिकायपद्मायुधवरबाहुगौर्यै स्वाहा । ॐनमो अपरदिग्दलान्तरासीनशुककान्तिमूर्तये वज्रमुशलाद्यायु-धसमृद्धानेककरगन्धार्यै स्वाहा । ॐनमो अपरोत्तरदिग्दलासीनामृतफेनपिण्डपाण्डुरशरीराकारज्वलन्महाज्वा-लादिमहाभयङ्करकरप्रहरणानेकभीमभुजज्वालामा[1]न्त्रे स्वाहा। ॐनमः अपरोत्तरदिग्दलान्तरासीनमरकतश्यामा-ङ्गोन्मूलिततरुवरादिप्रहरणानेकभीमकरमानव्यै स्वाहा। ॐनमः उत्तरदिग्दलासीनप्रियङ्गुपुष्पद्युतितनुभीमभुज-

१ ज्वालायै इति पाठान्तरम् ।

कनकान्तितनुकार्मुकाद्यनेकायुधानेक-
गाद्यनेकायुधानेककरवैरोट्यायै स्वाहा। ॐनमः उत्तरदिग्दलान्तरासीनकनककान्तितनुकार्मुकाद्यनेकायुधानेककरमानस्यै स्वाहा। ॐनमः
कराच्छुप्तायै स्वाहा। ॐनमः उत्तरपूर्वदिग्दलासीनपद्मरागाङ्गद्युतिशक्त्यादिशस्त्रानेककरमहानस्यै स्वाहा॥ इति विद्यादे-
उत्तरपूर्वदिग्दलान्तरासीनविद्युद्विलासभास्वरशरीरवाला(वाणा)द्यायुधानेककरमहानस्यै स्वाहा। ॐनमः पूर्वदक्षिणदिग्व्यवस्थिततद्देवीभ्यः
वीनां पूजामन्त्राः॥ ॐनमः पूर्वदिग्व्यवस्थितसौधर्मेन्द्रादिभ्यः स्वाहा। ॐनमो दक्षिणापरदिग्व्यवस्थिततद्देवीभ्यः स्वाहा।
स्वाहा। ॐनमोदक्षिणदिग्व्यवस्थितचमरेन्द्रादिभ्यः स्वाहा। ॐनमो अपरोत्तरदिग्व्यवस्थिततद्देवीभ्यः स्वाहा। ॐनमः
ॐनमो अपरदिग्व्यवस्थितचन्द्रेन्द्रादिभ्यः स्वाहा। ॐनमो उत्तरपूर्वदिग्व्यवस्थिततद्देवीभ्यः स्वाहा॥ इति वैमानि-
उत्तरदिग्व्यवस्थितकिन्नरेन्द्रादिभ्यः स्वाहा। ॐनमः पूर्वदिगन्तराध्यासिने तदधीशाय बाणकार्मुकव्यग्रकराय इन्द्राय स्वाहा।
कादिदेवानां देवीनां मन्त्राः॥ ॐनमः पूर्वदिगन्तराध्यासिने तत्स्वामिने ज्वलन्महाज्वालाधरायाग्नये स्वाहा। ॐनमो दक्षिणदिगन्त-
ॐनमः पूर्वदक्षिणदिगन्तराध्यासिने तत्स्वामिने ज्वलन्महाज्वालाधरायाग्नये स्वाहा। ॐनमो दक्षिणापरदिगन्तराध्यासिने तन्नाथाय
राध्यासिने तदधिष्ठात्रे महादण्डधारिणे यमाय स्वाहा॥ ॐनमो दक्षिणापरदिगन्तराध्यासिने तन्नाथाय
खड्गहस्ताय नैर्ऋतये स्वाहा। ॐनमोऽपरदिगन्तराध्यासिने तन्निवासिने पाशहस्ताय वरुणाय स्वाहा। ॐनमो
अपरोत्तरदिगन्तराध्यासिने तत्प्रभवे वज्रप्रहरणाय वायवे स्वाहा। ॐनमः उत्तरदिगन्तराध्यासिने तत्पालकाय
गदायुधाय कुबेराय स्वाहा। ॐनमः उत्तरपूर्वदिगन्तराध्यासिने तन्नाथाय शूलपाणये ईशानाय स्वाहा। ॐनमो
अधोदिगन्तराध्यासिने शिखामणिप्रभाभासुरभीषणफणासहस्राय पद्मावतीसहिताय सपरिकराय धरणेन्द्राय

स्वाहा । ॐनमः ऊर्ध्वदिगन्तराध्यासिने अच्युतोत्तरस्थितये अप्रतिहतपरमानन्दाय ब्रह्मणे स्वाहा ॥ ॥ इति दिग्देवतानां पूजामन्त्राः॥ ॥ ॐनमः पूर्वदिग्दलासीनरक्तद्युतिअक्षसूत्रकमण्डलुपाणिसकलजनकर्मसाक्षिणे आदित्याय स्वाहा । ॐनमो अपरोत्तरदिग्दलासीनधवलद्युतिअक्षमालाकमण्डलुपाणिअमृतात्मने सोमाय स्वाहा ॥ ॐनमो दक्षिणदिग्दलासीनरक्तप्रभाक्षवलयकुण्डिकालङ्कृतपाणितेजोमूर्तये मङ्गलाय स्वाहा। ॐनमः उत्तरदिग्दलासीनहेमप्रभाक्षसूत्रकमण्डलुव्यग्रपाणये बोधात्मने बुधाय स्वाहा ॥ ॐनमः उत्तरपूर्वदिग्दलासीनहरितालद्युतिअक्षसूत्रकुण्डिकायुतपाणित्रिदशमन्त्रिणे बृहस्पतये स्वाहा ॥ ॐनमः पूर्वदक्षिणदिग्दलासीनधवलवर्णाक्षसूत्रकमण्डलुपाणिअसुरमन्त्रिणे शुक्राय स्वाहा ॥ ॐनमो अपरदिग्दलासीनासितद्युतिअक्षवलयकुण्डिकालङ्कृतपाणिलम्बकूर्चभासुरमूर्तये शनैश्चराय स्वाहा ॥ ॐनमो दक्षिणापरदिग्दलासीनातिकृष्णवर्णपाणिद्वयविहितार्घमुद्रमहातमःस्वभावाय राहवे स्वाहा ॥ ॐनमः पूर्वदिग्दलासीनधूम्रवर्णद्युतिअक्षसूत्रकुण्डिकालङ्कृतपाणिद्वयानेकस्वभावात्मने केतवे स्वाहा ॥ इति ग्रहदेवतानां पूजामन्त्राः॥ ॐनमो दक्षिणदिग्भागासीनस्निग्धाञ्जनद्युतिमुद्गरपाशडमरुकाद्यनेकशस्त्रालङ्कृतानेकपाणिकामचारिणे क्षेत्रपालाय स्वाहा । ॐनमः पूर्वदक्षिणदिग्व्यवस्थितगणधरादित्रिकाय स्वाहा । ॐनमो दक्षिणापरदिग्भागावस्थितभवनपत्यादिदेवीत्रिकाय स्वाहा । ॐनमो अपरोत्तरदिग्व्यवस्थितभवनपत्यादिदेवत्रिकाय स्वाहा । ॐनमः उत्तरपूर्वदिग्व्यवस्थितवैमानिकादित्रिकाय स्वाहा ॥ इति द्वादशगणपूजामन्त्राः ॥ ॐनमः प्रथमप्राकारपूर्वद्वाराभ्यन्तरतोरणोभयपार्श्वव्यवस्थितकन

कावदातद्युतिवैमानिकयुगलकाभ्यां स्वाहा । ॐनमः प्रथमप्राकारदक्षिणद्वाराभ्यन्तरतोरणोभयपार्श्वव्यवस्थित-
धवलद्युतिव्यन्तरयुगलकाभ्यां स्वाहा । ॐनमः प्रथमप्राकारपश्चिमद्वाराभ्यन्तरतोरणोभयपार्श्वव्यवस्थितरक्तद्यु-
तिज्योतिष्कयुगलकाभ्यां स्वाहा । ॐनमः प्रथमप्राकारोत्तरद्वाराभ्यन्तरतोरणोभयपार्श्वाश्रितकृष्णद्युतिभवनप-
तियुगलकाभ्यां स्वाहा ॥ इति वैमानिकादियुगलानां मन्त्राः ॥ ॐनमः पूर्वदिग्लोकाधिपतिकार्मुकव्यग्रपाणिपू-
र्वद्वारे तिष्ठ २ सोमाय स्वाहा । ॐनमो दक्षिणदिग्लोकेशदण्डव्यग्रपाणि दक्षिणद्वारे तिष्ठ २ यमाय स्वाहा ।
ॐनमो अपरदिग्लोकाधिरक्षपाशहस्तापरद्वारि तिष्ठ २ वरुणाय स्वाहा । ॐनम उत्तरदिग्लोकपालमहागदाव्य-
ग्रहस्तोत्तरद्वारि तिष्ठ २ वैश्रवणाय स्वाहा ॥ इति प्रथमप्राकारद्वारपालपूजामन्त्राः ॥ ॐनमः पूर्वदिग्द्वाराधिदेवते
सितद्युतिअभयपाशाङ्कुशमुद्गरव्यग्रपाणि पूर्वद्वारि तिष्ठ २ जये स्वाहा । ॐनमो दक्षिणदिग्द्वाराधिदेवते रक्त-
द्युतिअभयपाशाङ्कुशमुद्गरालङ्कृतपाणि दक्षिणद्वारे तिष्ठ २ विजये स्वाहा । ॐनमो अपरदिग्द्वाराधिदेवते कन-
कप्रभे अभयपाशाङ्कुशमुद्गरव्यग्रपाणि पश्चिमद्वारे तिष्ठ २ अजिते स्वाहा । ॐनम उत्तरदिग्द्वाराधिदेवते श्या-
मद्युतिअभयपाशाङ्कुशमुद्गरालङ्कृतपाणि उत्तरद्वारे तिष्ठ २ अपराजिते स्वाहा ॥ इति द्वितीयप्राकारद्वारपालानां
पूजामन्त्राः ॥ ॐनमो भगवदर्हत् प्रतिपन्नप्रतिहारभावत्वेनाधिष्ठितद्वाराभ्यन्तराय जटामुकुटधारिणे नरशिरः-
कपालमालाभूषितशिरोधराय खट्वाङ्गपाणये तुम्बरवे स्वाहा ॥ इति तुम्बरुपूजामन्त्रः ॥ ॐनमो न्यग्रोधात्मकेभ्यः

१ व्यग्र इति पाठान्तरम् ।

सुराधिपतोरणेभ्यः स्वाहा । ॐनम उदुम्बरात्मकेभ्यः धर्मराजतोरणेभ्यः स्वाहा । ॐनम अश्वत्थात्मकेभ्यः सुराधिपतोरणेभ्यः स्वाहा । ॐनमः प्लक्षात्मकेभ्यः यक्षाधिपतोरणेभ्यः स्वाहा ॥ इति तोरणपूजामन्त्राः ॥ ॐनमः पूर्वद्वारव्यवस्थितेभ्यो धर्मध्वजेभ्यः स्वाहा । ॐनमो दक्षिणद्वारव्यवस्थितेभ्यो मानध्वजेभ्यः स्वाहा । ॐनमः पश्चिमद्वारव्यवस्थितेभ्यो गजध्वजेभ्यः स्वाहा । ॐनमः उत्तरद्वारव्यवस्थितेभ्यः सिंहध्वजेभ्यः स्वाहा ॥ इति ध्वजानां पूजामन्त्राः ॥ ॐनमः पीतद्युतिवज्रलाञ्छितकठिनात्मने पृथिवीमण्डलाय स्वाहा । ॐनमः कृष्णद्युतिषड्बिन्दुलाञ्छितवृत्तात्मने वायुमण्डलाय स्वाहा ॥ इति मण्डलपूजामन्त्रः ॥ एवमुक्तानुक्तमपि प्रणवादिस्वाहान्तैः स्वस्वनामभिः पूज्यम् ॥ इति नन्दावर्तपूजा ॥ ॥ ततो धूपमुत्क्षिप्य नानाकन्दमूलफलपक्वान्नहृद्यो बलिः प्रदेयः । सदशेन सितवाससा नूतनेन पट्टमाच्छाद्य पुष्पाक्षतचन्दनादिना वस्त्रोपरि सम्पूज्य स्थिरप्रतिमां तत्कर्णिकायां परिकल्प्य चलप्रतिमां तत्रैव स्थापयेदिति । ततः पुष्पाक्षतचन्दनवासयवालिकाकङ्कणसदशवस्त्रोपरि सम्पूज्य मदनफलानि सौभाग्यमन्त्रेणाधिवासनामन्त्रेण वा मुद्राभिश्चाभिमन्त्र्य प्रतिमासमीपं गत्वा चन्दनेन प्रतिमां सर्वाङ्गां विलेपयेत् । ततः पुष्पाण्यारोप्य वासक्षेपं कृत्वा तदनु कपाटजिनचक्रमुद्राभ्यां शक्तिं तेजस्विनीं कृत्वा पञ्चस्वष्टसु चाङ्गेष्वाचार्यमन्त्रेण द्वितीयेन मन्त्रन्यासं विधाय पश्चात्सौभाग्यमुद्रया सौभाग्यमन्त्रं न्यसेत् । तत्राङ्गानि शिरउभयांसकुक्षिद्वयपर्यवसानानि पञ्च तथा शिरोहृदयनाभिपृष्ठिबाहुद्वयोरुयुगलसंज्ञकान्यष्टा-

१ सलिलाधिप इति पाठः । २ वस्त्रमदन इति क. पाठः ।

चिति । ॐनमो भगवओ उसभसामिस्स पढमतित्थयरस्स सिज्झउमे भगवई महाविज्जा जेण सव्वेण इंदेण
सर्वदेवसमुदयेण मेरुम्मि सव्वोसहीहिं सव्वे जिणा अहिसित्ता तेण सव्वेण अहिवासयामि सुवयं दढवयं सिद्धं
गुद्धं मम्मं दंसणमणुपत्तं हिरि हिरि सिरि सिरि मिरि मिरि गुरु गुरु अमले अमले विमले विमले सुविमले सुविमले
मोक्खमग्गमणुपत्तो स्वाहा । अहवा ॐनमो खीरासवलद्धीणं ॐनमो महुआसवलद्धीणं ॐनमो संभिण्णसो-
इंणं ॐनमो पयाणुसारीणं ॐनमो कुट्ठबुद्धीणं जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ[1] ॐक्षः स्वाहा ॥
अधिवासने विधे ॥ ॐनमो वग्गु २ निवग्गु २ सुमिणे [3]सोमणसे महु महुरे जयंते अपराजिए स्वाहा ॥ सौभाग्य-
विद्या ॥ अनन्तरमाचार्यः सौभाग्यमन्त्रेण सप्तवारान् परिजप्य कङ्कणं मदनफलं यवमालिकां च निबन्धयेत् ॥
तदनु क्ष्मातेजोवाय्वाकाशपादपाणिपायुउपस्थवाक्घ्राणजिह्वाचक्षुस्त्वक्श्रोत्रमनःप्रभृतीनि तत्त्वानि संस्थाप्य
अनन्तरमारोग्यकान्तिसौरभ्यप्रस्वेदरहिततत्त्वमसृक्मांसयोः शुभ्रत्वं आहारनीहारयोरदृश्यत्वं निःश्वाससुगन्ध-
तेति सहजगुणकदम्बकं विन्यसेत् । ॐनमो विश्वरूपाय अर्हते केवलज्ञानदर्शनधराय हूं ह्रौं सः सहज-
गुणान् जिनेशे स्थापयामि स्वाहा ॥ सहजगुणस्थापनमन्त्रः ॥ ततो मन्त्रजसवाससाच्छादयेत् । तथाचागमः ।
[4]सदसनवधवलवत्थेण छाइउं वासपुप्फधूपेणं । अहिवासिज्ज तिन्नि वाराओ सूरिणो सूरिमन्तेण ॥ १॥ ततश्च पुष्पा-

१ कुरुकुरु इति ग. अधिकम् । २ पसीयउ इत्यन्यत्र । ३ सुमणे इत्यन्यकल्पेपु । ४ सदशनवधवलवस्त्रेण छादयित्वा वासपुष्पधूपेन ।
अधिवासयेयुः त्रीणि वाराणि सूरयः सूरिमन्त्रेण ॥ १ ॥

क्षतचन्दनादिकमुपरि प्रक्षिप्य रत्नफलमिश्रेण ससधान्येनाभिषिञ्चेत्। ततो नववस्त्राच्छादितायाः प्रतिमायाः चतुर्दिक्षु श्वेतकलशान् यवशरावयवारकान्वितान् स्थापयेत् ॥ तथाचागमः। [1]चत्तारि पुरो कलसा सलिलक्खय-कणयरूप्पमणिगब्भा। वरकुसुमदामकण्ठोवसोहिया चन्दणवलित्ता ॥ २ ॥ जववारयसयवत्ताइघट्टिया रयणमालियाकलिया। [3]सुह[2]पुण्णचत्तचउतंतुगोत्थया होंति पासेसु ॥ ३ ॥ ततो घृतगुडपूर्णान् मङ्गलप्रदीपान् प्रज्वालयेत्। तथाचोक्तम्। मं[4]गलदीवा य तहा घयगुलपुण्णा तहेखु[5]रखा य ॥ वरवन्नअक्खयविचित्तसोहिया तह य कायव्वा ॥ ४ ॥ तदनु कन्दमूलफलसम्मिश्रो विचित्रपक्वान्नमनोहरसप्तसराविकायुतः—तासां च द्रव्याणि पायसं गुडपिण्डाः कृसरा दध्योदनं सुकुमारिका शाल्योदनं सिद्धपिण्डकाश्चेति मनोहरो बलिर्देयः ॥ उक्तंच। [6]ओसहिफलवत्थसुवण्णरयणसुत्ताइयाइं विविहाइं। अन्नाइंवि गरुयसुदंसणाइं दव्वाइं विमलाइं ॥१॥ चित्तबलिगन्धमल्लविचित्तकुसुमाइं चित्तवासाइं। विविहाइं धन्नाइं सुहाइं रुवाइं उवणेह ॥२॥ ततो यववारकवेदिकादीन्यष्टमङ्गलकानि चतुरिकायां स्थापयेत्। चतुरिकावेद्यौ रक्तसूत्रेण वेष्टयेत्। चतुःकोणेषु रक्षार्थं कुलिशरूपानस्त्राभिम-

१ चत्वारः पुरः कलशाः सलिलाक्षतकनकरूप्यमणिगर्भाः। वरकुसुमदामकण्ठोपशोभिताश्चन्दनावलिप्ताः ॥२॥ यववारकशतपत्रादिघट्टिता रत्नमालिकाकलिताः। मुखपूर्णचत्रचतुस्तन्तुकावस्तुता भवन्ति पार्श्वेषु॥ ३ ॥ २ पुण्ण इति पाठान्तरम्। ३ सुह इति पाठान्तरम्। ४ मङ्गलदीपाश्च तथा घृतगुडपूर्णास्तथेक्षुरकाश्च। वरवर्णाक्षतविचित्रशोभितास्तथा च कर्तव्याः॥४॥ ५ तहेखुरुखा इति पाठान्तरम्। ६ ओषधिफलवस्त्रसुवर्णरत्नसूत्रादिकानि विविधानि। अन्यान्यपि गुरुकसुदर्शनानि द्रव्याणि विमलानि ॥ १ ॥ चित्रबलिगन्धमाल्यविचित्रकुसुमानि चित्रवासांसि। विविधानि धन्यानि शुभानि रूपाणि उपनयत ॥२॥

श्रितान् काण्डान् निवेशयेत्। तदनु रूपयौवनलावण्यवत्यो रचितोदारवेषा अविधवाः सुकुमारिकाः गुडपिण्ड-
पिहितमुखान् चतुरः कुम्भान् कोणेषु संस्थाप्य कांस्यपात्रीविनिहितदूर्वादध्यक्षततर्कुकाद्युपकरणसमन्विताः
सुवर्णादिदानपुरस्सरमष्टौ चतस्रो वा नार्यो रक्तसूत्रेण स्पृशेयुः। शेषाश्च मङ्गलानि दद्युः॥ तथाचागमः।
चउ नारीओमिणणं नियमा अहियासु नत्थि उ विरोहो। नेवत्थं व इमासि जं पवरं तं इहं सेयं॥१॥ दिक्खिय जिण-
ओमिणणा दाणाउ ससत्तिओ तहेयंमि। वेहव्वं दालिद्दं न होइ कइयावि नारीणं॥२॥ तासां च लवणगुडादि
दत्वा लवणारात्रिकमुच्चारयेत्। तथाचोक्तम्। आरत्तियमवयारणमङ्गलदीवं च निम्मिउं पच्छा। चउनारीहिं
निम्मच्छणं च विहिणा उ कायव्वं॥३॥ ततो वर्धमानस्तुतिभिः संघसहिताश्चैत्यवन्दनमधिवासनादिदेवतानां
कायोत्सर्गाणि कुर्यात्। उक्तं च। वंदितु चेइयाइं उस्सग्गो तह य होइ कायव्वो। आराहणानिमित्तं पवयणदे-
वीए संघेण॥४॥ विश्वाशेषसु वस्तुषु मन्त्रैर्याजस्रमधिवसति वसतौ। सास्यामवतरतु श्रीजिनतनुमधिवासनादेवी
॥५॥ प्रोत्फुल्लकमलहस्ता जिनेन्द्रवरभवनसंस्थिता देवी। कुन्देन्दुशङ्खवर्णा देवी अधिवासना जयति॥६॥ एवमनेन

१ पात्रविनिहित इति क. पाठः। २ कुङ्कुमाद्युप इति क. ख. पाठः। ३ चतुर्नार्यवमानं नियमात् अधिकासु नास्ति तु विरोधः। नेपथ्यं च आसां यत् प्रवरं तत् इह श्रेयः॥ १॥ दीक्षितजिनानां अवमानात् दानात् स्वशक्तितः तथा अस्मिन्। वैधव्यं दारिद्र्यं न भवति कदापि नारीणाम्॥ २॥ ४ आरार्तिकावतारणं मङ्गलदीपं च निर्माय पश्चात्। चतुर्नारीभिर्निर्मञ्छणं विधिना तु कर्तव्यम्॥३॥
५ वन्दित्वा चैत्यानि उत्सर्गस्तथा च भवति कर्तव्यः। आराधनानिमित्तं प्रवचनदेव्याः सङ्घेन॥ ४॥

विधिना श्रीमद्भगवन्तमधिवास्य गन्धधूपपुष्पाद्यधिवासितायां स्वास्तीर्णायां विद्रुमशय्यायां शाययेत् । [1]वर्म-जसाऽरक्तवाससा चाच्छादयेत् । तदनु ससगीतवाद्यमङ्गलादिना चतुर्विधश्रमणसङ्घेन सह । ततः प्रभातायां शर्वर्यामुदये प्राप्ते वासरे सूरिः प्रतिष्ठां कुर्यात् ॥ उक्तं च ॥ [2]इय विहिणा अहिवासेज्ज देवबिम्बं निसाए सुद्धमणो । तो उग्गयम्मि सूरे होइ पइट्ठासमारम्भो ॥ १ ॥ इति अधिवासनाविधिः ॥ ततः काञ्चित् कालकलां विलम्ब्य पूर्ववच्छान्तिबलिं प्रक्षिप्य चैत्यवन्दनादिकं कर्म कृत्वा वस्त्रमपनीयाऽविधवनायिकायाः समर्पयेत् । ततो रजतमयवर्तिकानिहितमधुदिव्यया सुवर्णशलाकया अर्हन्मन्त्रमुच्चार्य ज्ञानचक्षुरुन्मीलयेत् ॥ तथा चागमः ॥ [3]कल्लाणसलायाए महुघयपुण्णाए अच्छि उग्घाडे[4] । अण्णेण वा हिरण्णेण नियय जहसत्तिविहवेण ॥२॥ दृष्टिन्यासे च दृष्टेराप्यायननिमित्तं घृतादर्शदधीनि संदर्शयेत् । तदनु योजनेऽपि कोटिसहस्रावस्थानं वचनस्य स्वस्वभाषया परिणमनं रुग्वैरमारिदुर्भिक्षडमरादीनामभावः । अतिवृष्ट्यनावृष्टी न भवतः । इति कर्मक्षयोत्पन्नगुणान् जिने-न्द्राणां स्थापयेत् । ॐ नमो भगवते अर्हते घातिक्षयकारिणे घातिक्षयोत्पन्नगुणान् जिने संस्थापयामि स्वाहा । घातिकर्मक्षयोत्पन्नैकादशातिशयस्थापनामन्त्रः ॥ पश्चादाचार्यः स्वमन्त्रोच्चारपुरस्सरं प्रासादं गत्वा विम्बानु-त्साद्य रत्नादिपञ्चकं विन्यसेत् । तत्र पूर्वस्यां वज्रं, आग्नेय्यां सूर्यकान्तं, दक्षिणस्यां नीलं, नैर्ऋत्यां महानीलं,

१ धर्म इति स्यात् । २ इति विधिना अधिवासयेत् देवबिम्बं निशायां शुद्धमनाः । तत उद्गते सूर्ये भवति प्रतिष्ठासमारम्भः ॥ १ ॥
३ कल्याणशलाकया मधुघृतपूर्णया अक्षी उद्घाटयेत् । अन्येन वा हिरण्येन नियतयथाशक्तिविभवेन ॥ २ ॥ ४ उघारे इति ग. पाठः ।

पश्चिमस्यां मौक्तिकं, वायव्यां पुष्परागं, उत्तरस्यां पद्मरागं, ईशान्यां वैडूर्यमिति पूर्वादिगर्तासु विन्यस्य। मध्य-गर्तायां समस्तानीति। ततो हेमताम्रकृष्णलोहत्रपुरौप्यरीतिकाकांस्यसीसकाद्यपि पूर्वादिगर्तासु मध्ये सम-ग्राणि देशशक्तिमनुस्मरन् न्यस्येत्। तदनु हरितालीं मनःशिलां तौरिकां सुवर्णमाक्षिकां पारदं हैमगैरिकं गन्धकां अभ्रकामिति धातून् स्मृतिबीजात्मकान् पूर्वादिगर्तासु। मध्ये समस्तानि। अथोशीरविष्णुक्रान्तारक्त-चन्दनकृष्णागुरुश्रीखण्डं उत्पलसारिकं कुष्टं शङ्खपुष्पिकाद्यौपधीरारोग्यशक्तिमनुसंधाय यथासंख्यं पूर्वादिग-र्तासु मध्यगर्तायामखिलाश्न्यसेदिति॥ यद्वा सर्वरत्नाभावे वज्रं लोहानां सुवर्णं धातूनां हरितालं औषधीनां सहदेवी बीजानां यवाः एकं वा पारदं सर्वगर्तासु विन्यस्य। मध्यमगर्तायां सिंहासनपाण्डुकम्बलशिलालङ्कृतं हेममयं ताम्रमयं मृन्मयं मेरुं स्थापयेदिति। स्थिरप्रतिष्ठायामयं विधिरितरायां रत्नगर्भाकुलालचक्रमृत्तिकां दर्भांश्च स्थापयेदिति। ततो धर्मजसवाससा प्रच्छाद्य लोकपालानां वलिं दत्वा जयशब्दादिमङ्गलैः सतूर्यनि-र्घोषै रत्नकरम्बकं संक्षिप्य अधिवासनामण्डपात् भगवन्तं भद्रपीठे समुत्तार्य स्थिरो भवेत्युक्त्वा छादिकाभिः सूत्रान्तरेण प्रगुणं विधाय लग्नकालमवलोकयेत्। अनन्तरमाचार्यो मध्यमया चन्दनं अङ्गुष्ठतर्जनीभ्यां वासान् मुष्टौ पुष्पाक्षतान् संगृह्य स्वमंत्रेण[1] कुम्भकविधिना सृष्टिमार्गमनुस्मरन्[2] सूत्रधारोपनीतछदिकं प्राणेन सह प्रतिष्ठाप्य। ॐअर्हं इति मन्त्रेणोत्तमाङ्गादिषु वासादिक्षेपं कुर्यात्। तत आचार्यमन्त्रेण। ॐनमो अरिहंताणं।

१ समन्त्रेण इति ग. पाठः। २ मनुसरन् इति क. पाठः।

ॐनमो सिद्धाणं। ॐनमो आयरियाणं। ॐनमो उवज्झायाणं। ॐनमो लोएसव्वसाहूणं। ॐनमो ओहिजिणाणं। ॐनमो परमोहिजिणाणं। ॐनमो सव्वोहिजिणाणं। ॐनमो अणन्तोहि जिणाणं। ॐनमो केवलिजिणाणं। ॐनमो भवत्थकेवलिजिणाणं। ॐनमो भगवओ अरहओ महई महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई (इमा) महई महाविज्जा वीरे २ महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जये विजये जयन्ते अपराजिए अणिहए माचल २ वृद्धिदे[2] २ हूं २ ह्रीं २ सः[3] २ ओहिणि[4] मोहिणि स्वाहेत्यादिना प्रतिष्ठामन्त्रेणाचार्यमन्त्रेण वा चक्रमुद्रया प्रतिमायां त्रिपञ्चसप्तवारान् मन्त्रन्यासं विधाय ॐ ह्रीं अर्हन्मूर्तये नमः इति पुनः प्रवचनमुद्रया मूर्तिं प्रतिबोध्य स्थावरे तिष्ठ २ स्वाहा इति जिनमुद्रया स्थिरीकरणं कृत्वा आचार्यः धेनुमुद्रयाऽमृतीकृत्याऽस्त्रमन्त्रेण गरुडमुद्रया दुःखविघ्नादीनुत्साद्य सौभाग्यमन्त्रेण योनिमुद्रया सौभाग्यमारोप्य ऋषभाद्येकतमं जिने नाम कृत्वा गन्धपूष्पधूपादिभिः सम्पूज्य नमस्कारमुद्रया नमस्कृतिं विदध्यात् ॥ तदनु कनककमलपातश्चतुरङ्गताकण्टकानामधोमुखीभावो रोमनखानामवस्थितत्वमिन्द्रियार्थानुकूलता सर्वर्तूनां प्रादुर्भावो गन्धोदकवृष्टिः शकुनानां प्रदक्षिणगतयो द्रुमाणामवनतिः प्रभञ्जनानुकूलता भवनपतिप्रभृतीनां जघन्येन कोटिमात्रावस्थानमित्येवं सुरकृतातिशयप्रातिहार्ययक्षयक्षेश्वरीधर्मचक्रमृगद्वन्द्वरत्नध्वजप्राकारत्रयादीन् प्रत्येकं स्वस्वमन्त्रैः संस्थापयेत् ॥ तत्रातिशयादीनां स्थापनमन्त्राः। ॐनमो भगवते अर्हते सुरकृतातिशयान् जिनस्य शरीरे

१ सव्वत्थ इति पाठान्तरम्। २ बुद्धिदे इति ग. पाठः। ३ सा २ इति पाठान्तरम्। ४ अरिणि इत्यन्यकल्पेषु दृश्यते।

स्थापयामि स्वाहा। ॐनमो भगवते अर्हते असिआउसा जिनस्य प्रातिहार्याष्टकं स्थापयामि स्वाहा। ॐयक्षेश्वराय
स्वाहा। ॐ ह्रीं हूं ह्रीं शासनदेव्यै स्वाहा। ॐधर्मचक्राय स्वाहा। ॐमृगद्वन्द्वाय स्वाहा। ॐरत्नध्वजाय
स्वाहा। ॐनमो भगवते अर्हते जिनप्राकारादित्रयं स्थापयामि स्वाहा॥ इति अतिशयादीनां स्थापनामन्त्राः॥
ततोऽविधवानारीभिः प्राग्वत् स्पर्शनादिकं कर्म कृत्वा लवणारात्रिकमुत्तार्य चतुर्विधश्रमणसङ्घसहितो देवव-
न्दनं प्रतिष्ठादिदेवतानां कायोत्सर्गाणि कुर्यात्॥ तथा चागमः॥ तो चेइयाइं विहिणा वन्दिज्जा सयलसङ्घ-
संजुत्तो। परिवड्ढमाणभावो जिणदेवे दिन्नदिट्ठीओ॥ १॥ ततोच्चिय पवयणदेवयाए पुणरवि करेज्ज उस्सग्गो।
आराहणथिरकरणट्ठयाए परमाए भत्तीए॥ २॥ यदधिष्ठिताः प्रतिष्ठाः सर्वाः सर्वास्पदेषु नन्दन्ति। श्रीजिन-
बिम्बं सा विशतु देवता सुप्रतिष्ठमिदम्॥ ३॥ जइ सग्गे पायाले अहवा खीरोदहिम्मि कमलवणे। भयवइ क-
रेहि सत्तिं सन्निज्झं सयलसङ्घस्स॥४॥ अट्ठविहकम्मरहियं जा वन्देइ जिणवरं पयत्तेण। सङ्घस्स हरउ दुरियं
सिद्धा सिद्धाइया देवी॥ ५॥ ततोऽञ्जलिमुद्रया सिद्धादिमङ्गलोद्घोपणपूर्वकमुत्तरोत्तरपूजाभिवृद्धये सङ्घेन सह

१ लुं इलन्यत्र। २ वत्सायेति पाठान्तरम्। ३ ततश्चैत्यानि विधिना वन्देत सकलसङ्घसंयुक्तः। परिवर्धमानभावो जिनदेवे दत्तदृष्टिकः॥ १॥ ततश्चैव प्रवचनदेवतायाः पुनरपि कुर्यादुत्सर्गः। आराधनस्थिरीकरणार्थकया परमया भक्त्या॥ २॥ यदि स्वर्गे पाताले अथवा क्षीरोदधौ कमलवने। भगवती करोति शक्तिं सान्निध्यं सकलसङ्घस्य॥ ४॥ अष्टविधकर्मरहितं या वन्दते जिनवरं प्रयत्नेन। सङ्घस्य हरतु दुरितं सिद्धा सिद्धायिका देवी॥ ५॥ ४ मङ्गलाघोपण इति पाठः।

पुष्पगन्धादिमिश्रस्य सप्तधान्यकस्य प्रक्षेपं कुर्यात् । उक्तं च । वन्दितु चेइयाइं इमाइं तो सरभसं पढेज्जा । सुमङ्गलसाराइं तहा थिरत्तसारेण सिद्धाइं ॥१॥ तद्यथा । जह सिद्धाण पइट्ठा तिलोयचूडामणिम्मि सिद्धिपए । आचन्दसूरियं तह होइ इमा सुप्पइट्ठत्ति ॥ २॥ गेविज्जगकप्पाणं सुपइट्ठा वण्णिया जहा समए । आचन्दसूरियं तह होइ इमा सुप्पइट्ठत्ति ॥ ३ ॥ जह मेरुस्स पइट्ठा[2] असेससेलाणमज्झयारम्मि । आचन्दसूरियं तह होइ इमा सुप्पइट्ठत्ति ॥ ४ ॥ कुलपव्वयाणवक्खारवट्टवेयट्टदीहियाणं च । कूडाण जमगकंचणवित्तविचित्ताइयाणं च ॥ ५ ॥ अञ्जणगरुयगकुण्डलमाणुसइसुयारमाइयाणं च । सेलाण जह पइट्ठा तह एसा होइ सुपइट्ठा ॥ ६ ॥ जह लवणस्स पइट्ठा असेसजलहीण मज्झयारम्मि । आचन्दसूरियं तह होइ इमा सुप्पइट्ठत्ति ॥ ७ ॥ कुण्डा-

---

१ वन्दित्वा चैत्यानि इमानि ततः सरभसं पठेत् । सुमङ्गलसाराणि तथा स्थिरत्वसारेण सिद्धानि ॥ १ ॥ यथा सिद्धानां प्रतिष्ठा त्रिलोकचूडामणौ सिद्धिपदे । आचन्द्रसूर्यं तथा भवति इमा सुप्रतिष्ठा इति ॥ २ ॥ ग्रैवेयककल्पानां सुप्रतिष्ठा वर्णिता यथा समये । आचन्द्रसूर्यं तथा भवति इमा सुप्रतिष्ठा इति ॥ ३ ॥ यथा मेरोः प्रतिष्ठा अशेषशैलानां मध्ये ( मध्यकारे ) । आचन्द्रसूर्यं तथा भवति इमा सुप्रतिष्ठा इति ॥ ४ ॥ कुलपर्वतानां वक्षस्कारवृत्तवैताढ्यदीर्घिकाणां च । कूटानां यमलकांचनवित्तविचित्रादिकानां च ॥ ५ ॥ अञ्जनरुचककुण्डलमानुपोत्तरइषुकारआदिकानाम् । शैलानां यथा प्रतिष्ठा तथा एषा भवति सुप्रतिष्ठा ॥६॥ यथा लवणस्य प्रतिष्ठा अशेषजलधीनां मध्ये ( मध्यकारे ) । आचन्द्रसूर्यं तथा भवति इमा सुप्रतिष्ठा इति ॥ ७ ॥ कुण्डानां द्रहाणां तथा महानदीनां च यथा सुप्रतिष्ठा ।

२ पइट्ठो इति क. पाठः ।

जह य सुपइट्ठा । आकालमीतहेसा वि होउ निच्चन्तु सुपइट्ठा ॥८॥ जम्बुद्दीवाईणं दी-
णा दहाणं तह महानईणं व
यसमुद्दाणं सव्वकालंमि । जह एयाण पइट्ठा सुपइट्ठा होउ तह एसा ॥ ९ ॥ धम्माधम्मागासत्थिकायमइयस्स
सव्वलोयस्स । जह सासया पइट्ठा एसावि तहेव सुपइट्ठा ॥ १० ॥ पञ्चण्हवि सुपइट्ठा परमेट्ठीणं जहा सुए
भणिया । नियया अणाइणिहणा तह एसा होउ सुपइट्ठा ॥ ११ ॥ तह पवयणस्स गमभंगहेउनयनीइकालकलि-
यस्स । जह एयस्स पइट्ठा निच्चा तह होउ एसावि ॥ १२ ॥ तह संघनराहिवजणवयाण रज्जस्स तहय ठाणस्स ।
गोट्ठीए सव्वकालंपि सासया होउ सुपइट्ठा ॥ १३ ॥ इय एसा सुपइट्ठा गुरुदेवजईहिं तह य भविएहिं । निउणं
पुट्ठा सद्देण चेव कप्पट्ठिआ होइ ॥ १४ ॥ सोउं मङ्गलसद्दं सउणं ति जहेव इट्ठ सिद्धत्ति । एत्थंपि तहा सम्मं

आकालमीवहेषापि भवतु नित्यं तु सुप्रतिष्ठा ॥ ८ ॥ जम्बुद्वीपादीनां द्वीपसमुद्राणां सर्वकाले । यथा एषां प्रतिष्ठा सुप्रतिष्ठा भवतु तथा
एषा ॥ ९ ॥ धर्माधर्माकाशास्तिकायमयस्यास्य सर्वलोकस्य । यथा शाश्वता प्रतिष्ठा एषापि तथैव सुप्रतिष्ठा ॥ १० ॥ पञ्चानामपि सुप्रतिष्ठा
परमेष्ठीनां यथा श्रुते भणिता । नियता अनादिनिधना तथा एषा भवतु सुप्रतिष्ठा ॥ ११ ॥ तथा प्रवचनस्य गमभङ्गहेतुनयनीतिकालक-
लितस्य । यथा एतस्य प्रतिष्ठा नित्या तथा भवतु एषापि ॥ १२ ॥ तथा सङ्घनराधिपजनपदानां राज्यस्य तथैव स्थानस्य । गोष्ठ्याः
सर्वकालमपि शाश्वता भवतु सुप्रतिष्ठा ॥ १३ ॥ इति एषा सुप्रतिष्ठा गुरुदेवयतिभिः तथाच भविकैः । निपुणं पुष्टा सद्देन चैव कल्पस्थिता
भवति ॥ १४ ॥ श्रुत्वा मङ्गलशब्दं शकुनं इति यथैव इष्टं सिध्यति । अत्रापि तथा समं ज्ञातव्यं बुद्धिमद्भिः ॥ १५ ॥

१ सव्वद्दुविमाणाणं उद्धलोयंमि जहय सुपइट्ठा । आचन्दसूरियं तह होइ इमा सुपइट्ठत्ति इत्यधिकम् । २ सउणि इति पाठान्तरम् ।
३ सिद्धित्ति इति श्रीहरिभद्रकृताष्टमपञ्चाशके ।

नायव्वं बुद्धिमन्तेहिं ॥ १५ ॥ राया बलेण वड्ढइ जसेण धवलेइ सयलदिसिभाए । पुण्णं वड्ढइ विउलं सुपइट्ठा जस्स देसंमि ॥ १६ ॥ उवहणइ रोगमारी दुब्भिक्खं हणइ कुणइ सुहभावे । भावेण कीरमाणा सुपइट्ठा सयललोयस्स ॥ १७ ॥ जिणबिंबपइट्ठं जे करिंति तह कारविंति भत्तीए । अणुमण्णन्ति पइदिणं सव्वे सुहभाइणो होंति ॥ १८ ॥ दव्वं तमेव भणई जिणबिम्बपइट्ठणंमि धण्णाणं । जं लग्गइ तं सयलं दोग्गइजणणं हवइ सेसं ॥ १९ ॥ एवं नाऊण सया जिणवरबिम्बस्स कुणह सुपइट्ठं । पावेह जेण जरमरणवज्जियं सासयं ठाणं ॥ २० ॥ ततो मुखोद्घाटनकं कृत्वा शान्त्यर्थं शान्तिबलिं क्षिपेत् । ॐनमो भगवते अर्हते शान्तिनाथस्वामिने सकलकलातिशेषमहासम्पत्समन्विताय त्रैलोक्यपूजिताय नमोनमः शान्तिदेवाय सर्वामरसुसमुहस्वामिसम्पूजिताय भुवनपालनोद्यताय सर्वदुरितविनाशनाय सर्वाशिवप्रशमनाय सर्वदुष्टग्रहभूतपिशाचमारिशाकिनीप्रमथनाय नमो भगवति जये विजये अजिते अपराजिते जयन्ति जयावहे सर्वसङ्घस्य भद्रकल्याणमङ्गलप्रदे

---

राजा बलेन वर्धते यशसा धवलयति सकलदिशिभागे । पुण्यं वर्धते विपुलं सुप्रतिष्ठा यस्य देशे ॥ १६ ॥ उपहन्ति रोगमारी दुर्भिक्षं हन्ति करोति सुखभावे । भावेन क्रियमाणा सुप्रतिष्ठा सकललोकस्य ॥ १७ ॥ जिनविम्बं प्रतिष्ठितं ये कुर्वन्ति कारयन्ति भक्त्या । अनुमन्यन्ते प्रतिदिनं सर्वे सुखभागिनो भवन्ति ॥ १८ ॥ द्रव्यं तदेव भणति जिनविम्बप्रतिष्ठाने धन्यानाम् । यद् लगति तत् सकलं दुर्गतिजनकं भवति शेषम् ॥ १९ ॥ एवं ज्ञात्वा सदा जिनवरविम्बस्य कुरुत सुप्रतिष्ठाम् । प्राप्नुथ येन जरामरणवर्जितं शाश्वतं स्थानम् ॥ २० ॥

१ वंधियमिति पाठान्तरम् ।

साधूनां श्रीशान्तितुष्टिपुष्टिदे स्वस्तिदे भव्यानां सिद्धिवृद्धिनिर्वृत्तिनिर्वाणजनने सत्वानामभयप्रदानरते भक्तानां शुभावहे सम्यग्दृष्टीनां धृतिरतिमतिबुद्धिप्रदानोद्यते जिनशासनरतानां श्रीसम्पत्कीर्तियशोवर्धनि रोगजलज्वलनविषविषधरदुष्टज्वरव्यन्तरराक्षसरिपुमारिचौरईतिश्वापदोपसर्गादिभयेभ्यो रक्ष २ शिवं कुरु २ शान्तिं कुरु २ तुष्टिं कुरु २ पुष्टिं कुरु २ ॐनमो नमः हूं हः क्षः ह्रीं फट् २ स्वाहा ॥ शान्तिबलिमन्त्रः ॥ तदनु सङ्घादिपूजा दीनानाथादिदानं बन्धमोक्ष इति प्रवचनोद्भासनानिमित्तमवश्यं कर्तव्यमिति ॥ उक्तंच ॥ सत्तीए सङ्घपूया विसेसपूया य बहुगुणा एसा । जं एस सुए भणिओ तित्थयराणंतरो सङ्घो ॥ १ ॥ गुणसमुदओ य सङ्घो पवयण तित्थन्ति होइ एगट्ठा । तित्थयरोवि य एयं नमए गुरुभावओ चेव ॥ २ ॥ तप्पुव्विया अरहया पूइयपूया य विणयकम्मं य । कयकिच्चो(किचो)वि जह कहं कहेइ नमए तहा तित्थं ॥ ३ ॥ एयंमि पूइयंमि नत्थि तयं जं न पूइयं होइ । भुवणेवि पूयणिज्जं न गुणट्ठाणं जओ अन्नं ॥ ४ ॥ तप्पूयापरिणामो हंदि महाविसयमो मुणे-

१ शक्त्या सङ्घपूजा विशेषपूजा च बहुगुणा एषा । यत् एषः श्रुते भणितः तीर्थकरानन्तरः सङ्घः ॥ १ ॥ गुणसमुदयश्च सङ्घः प्रवचनं तीर्थमिति भवन्ति एकार्थाः । तीर्थंकरोपि च एनं नमति गुरुभावतश्चैव ॥ २ ॥ तत्पूर्विका अर्हत्ता पूजितपूजा च विनयकर्म च । कृतकृत्यो ( कृतकृत्यो ) पि यथा कथं कथयति नमति तथा तीर्थम् ॥ ३ ॥ एतस्मिन् पूजिते नास्ति ( तकत् ) तत् यत् न पूजितं भवति । भुवनेपि पूजनीयं न पुनः स्थानं यतः अन्यत् ॥ ४ ॥ तत्पूजापरिणामो हन्त महाविषयो मन्तव्यः । तद्देशपूजनेपि देवतापूजादि

१ गुरुभाव इति क. पाठः । २ गुणठाणं इति पञ्चाशके ।

यव्वो । तद्देसपूयणम्मि वि देवयपूयाइ नाएण ॥ ५ ॥ आसन्नसिद्धियाणं लिंगमिणं जिणवरेहिं पन्नत्तं । सङ्घंमि
चेव पूया सामन्नेणं गुणनिहिम्मि ॥ ६ ॥ एसा य महादाणं एसच्चिय होइ भावजन्नत्ति । एसो गिहत्थसारो एस-
च्चिय सम्पयामूलम् ॥ ७ ॥ एईए फलं एयं परमं निव्वाणमेव नियमेण । सुरनरसुहाइं अणुसंगियाइं इह किसि-
पलालं व ॥ ८ ॥ कयमत्थपसंगेणं उत्तरकालोइयं इयह्लिम्पि । अणुरूपं कायव्वं तित्थुन्नइकारगं नियमा ॥ ९ ॥
जइओ जणोवयारो विसेसओ णवरसयणवग्गम्मि । साहम्मियवग्गम्मि य एयं खलु परमवच्छल्लम् ॥ १० ॥
तदनन्तरमष्टाहिका देशकालकार्यवशात्र्यहिका वा नियमतः कर्तव्येति ॥ तथाचोक्तम् ॥ अट्ठाहिया य महिमा
सम्मं अणुबन्धसाहिया केइ । अहवा तिन्नि य दियहे निओगओ चेव कायव्वा ॥ ११ ॥ तदनु तथाविधकार्यवशात्

ज्ञातेन ॥ ५ ॥ आसन्नसिद्धिकानां लिङ्गमिदं जिनवरैः प्रज्ञप्तम् । सङ्घे चैव पूजा सामान्येन गुणनिधौ ॥ ६ ॥ एषा
च महादानं एषा चैव भवति भावयज्ञ इति । एष गृहस्थसारः एषापि च सम्पदामूलम् ॥ ७ ॥ अस्याः फलं एतत् परमं निर्वाणमेव नियमेन ।
सुरनरसुखानि आनुषङ्गिकाणि इह कृषिपलालमिव ॥ ८ ॥ कृतमर्थप्रसङ्गेण उत्तरकालोदितं इदानीमपि । अनुरूपं कर्तव्यं तीर्थोन्नति-
कारकं नियमात् ॥ ९ ॥ जनितो जनोपकारः विशेषतः नवरं स्वजनवर्गे । साधर्मिकवर्गे च एतत् खलु परमवात्सल्यम् ॥ १० ॥

१ कारणं इति ग. पाठः । २ अष्टाहिका च महिमा सम्यग् अनुबन्धसाधिका केचित् । अथवा त्रीन् च दिवसान्
नियोगतश्चैव कर्तव्या ॥ ११ ॥

प्रथमदिने तृतीयदिने वा विशेषपूजां विधाय लोकपालान् सम्पूज्य सुवासिनीमङ्गलपूर्वकं । ॐ ह्रूं भ्रूं क्ष्वीं सः इत्यनेन मन्त्रेण प्रतिसरोन्मोचनकं कृत्वा नन्दावर्तसंनिधौ गत्वा विसर्जनार्थमर्घं दत्वा भोगाङ्गानि पूर्वोक्तन्यायेन संहृत्य देवे संयोज्य संहारमुद्रया स्वस्थानं गच्छ गच्छ इत्यनेन मन्त्रेण पूजां द्वादशान्तमानीय शिरस्यारोप्य पूरकेण सापेक्षं क्षमस्वेति हृत्कमले विसर्जयेत् ॥ उक्तंच । अट्ठाहियावसाणे पडिस्सरोमुयणमेव कायवं । भूयबलिदीणदाणं एत्थंपि ससत्तिओ कुज्जा ॥ १ ॥ ततो घृतदुग्धदध्यादिभिः स्नानं विधाय अष्टोत्तरशतेन वारकाणां स्नापयेत् । ततो मासं प्रति द्वादश स्नपनानि कृत्वा पूर्णे संवत्सरे अष्टाहिकापूर्विकां विशेषपूजां विधाय दीर्घायुर्ग्रन्थिं नियन्धयेदित्येवमुत्तरोत्तरं विशेषपूजादिकं निःश्रेयसार्थिना सर्वदैवावहितेन कर्तव्यमिति । ईय सत्तिविहवसत्ताणुसारओ वण्णिया पइट्ठाउ । विहवाभावासत्तीए असढभावो इयं कुज्जा ॥ १ ॥ पुहइमयं पिहु अङ्गुट्ठमेत्तयं तणकुडाए विसुओ य । सुइभूओ जिणबिंबं ठविज्ज इमिणा विहाणेण ॥ २ ॥ संसारविरागमणो गरहानिंदाजुगुच्छियप्पाणो । काऊण भावमंगल पंचनमुक्काररूवं तु ॥ ३ ॥

१ तु अन्यत्रपुस्तके । २ अष्टाह्निकावसाने प्रतिसरोन्मोचनमेव कर्तव्यं भूतबलिदीनदानं अत्रापि स्वशक्तितः कुर्यात् ॥ ३ देवदाणमित्यन्यत्रपुस्तके । ४ इति शक्तिविभवसत्त्वानुसारतो वर्णिता प्रतिष्ठा तु । विभवाभावाशक्त्या अशठभाव इमां कुर्यात् ॥ १ ॥ पृथ्वीमयं पृथु अङ्गुष्ठमात्रकं तृणकुट्यां विश्रुतश्च । शुचिभूतो जिनविम्बं स्थापयेत् अनेन विधानेन ॥ २ ॥ संसारविरागमना गर्हानिन्दाजुगुप्सितात्मा । कृत्वा भावमङ्गलं पञ्चनमस्काररूपं तु ॥ ३ ॥

[1]कासस्स य कुसुमेहिं [2]पुण्हउ (सुरहि) सुरहिकुसुमविरहंमि। कारिज्ज पइट्ठं परमभत्तिबहुमाणसंजुत्तो ॥ ४ ॥ कलसाईणमभावे विरहे तह सेसमङ्गलाणं च। पञ्चनमुक्कारो चिय भावोत्तममंगलं नियमा ॥ ५ ॥ पज्जत्तमिणे णियमा मायालोहेहिं विप्पमुक्कस्स। पञ्चनमोक्कारेणं जं कीरइ मंगलाईयं ॥ ६ ॥ सव्वत्थ भावमङ्गल-पञ्चनमोक्कारपुव्विया किरिया। कायव्वा जिणबिंबाण सव्वभावेण सुपइट्ठा ॥ ७ ॥ मणिकयसुवन्नरीरीपडिमं पाहाणणिम्मिए भुवणे। जो ठवइ भत्तिजुत्तो तस्स दुहं नैव कइयावि ॥ ८ ॥ इय सामन्नपइट्ठा-विहाणमेयं समासओ भणियं। इण्हिं भणिमो लिप्पाइयाण अचलाण पडिमाणं ॥ ९ ॥ ॥ तत्र पूर्ववत् भूतबलिं दत्वा चैत्यवन्दनादिकं कर्म निवर्तयित्वा शुद्धदर्पणमानीय प्रतिमाभिमुखं स्नानमण्डपपीठिकायां प्रतिमावदादर्शप्रतिबिम्बितां शान्ताकृतिमभिषिच्य शेषं पूर्वविधिना निखिलमपि कर्म कर्तव्यमिति। एवमनेन विधिना

१ काशस्य च कुसुमैः पुण्यस्तु सुरभि सुरभिकुसुमविरहे। कारयेत् प्रतिष्ठां परमभक्तिबहुमानसंयुक्तः ॥ ४ ॥
कलशादीनामभावे विरहे तथा शेषमङ्गलानां च। पञ्चनमस्कारश्चैव भावोत्तममङ्गलं नियमात् ॥ ५ ॥
पर्याप्तमस्मिन् नियमात् मायालोभैर्विप्रमुक्तस्य। पञ्चनमस्कारेण यत् करोति मङ्गलादिकम् ॥ ६ ॥
सर्वत्र भावमङ्गलपञ्चनमस्कारपूर्विका क्रिया। कर्तव्या जिनबिम्बानां सर्वभावेण सुप्रतिष्ठा ॥ ७ ॥
मणिकट(काष्ठ)सुवर्णरीतिप्रतिमां पाषाणनिर्मिते भुवने। यः स्थापयति भक्तियुक्तस्तस्य दुःखं नैव कदापि ॥ ८ ॥
इति सामान्यप्रतिष्ठाविधानमेतत् समासतो भणितम्। इदानीं भणामो लेपादिकानां अचलानां प्रतिमानाम् ॥ ९ ॥
२ पुण्ह ॐ इति पाठान्तरम्। कचित् पुण्ह ॐ सुरहि सुरहि इति पाठो दृश्यते।

गयावत् विज्ञागाभ्यस्य चाभिमानादिरहितेनार्येण प्रतिष्टादिकं कर्तव्यमन्यथाकरणे भवपातः । तथाचोक्तम् । अविग्याणी उणियविहिं जिणविंबं जो ठवेइ मूढमणो । अहिमाणलोहजुत्तो निवडइ संसारजलहिम्मि ॥ १ ॥ सरस्वत्यादिप्रतिमानां च पूर्ववत् मण्डलादिकं कर्म कृत्वा स्वेन स्वेन मन्त्रेण प्रतिष्ठा कर्तव्येति । तत्र तासां प्रतिष्ठादिमन्त्राः । ॐ क्षूं नमः । ॐ ह्रीं हं ह्रीं नमः । ॐ जये श्रीं हँ सुभद्रेइं स्वाहा ॥ समस्तवैयावृत्यादीनामभिवासनाप्रतिष्ठासौभाग्यमन्त्रः । इदानीं विवरणे ॐ इं ह्रीं श्रीं ह्रीं इं सरस्वति अवतर २ तिष्ठ २ स्वाहा । ॐ ह्रीं माणिभद्रयक्ष अवतर २ तिष्ठ २ स्वाहा । ॐ ह्रीं वं ब्रह्मणे शान्ति अवतर २ तिष्ठ २ स्वाहा । ॐ ह्रीं अं अम्बिके अवतर २ तिष्ठ २ स्वाहा ॥ इति बिम्बप्रतिष्ठा तृतीया ॥ ॥ अथ मृतप्रतिष्ठाविधिः ॥ तत्र पूर्ववत् मण्डपप्रवेशं विधायोत्तरवेदिकायां यथाविभवतो हेममयं पुरुषं संनिधाय पूर्ववत् संस्नाप्य चन्दनादिना विलिप्य वस्त्रैः संछाद्य निवासमण्डपं समानीय वेदिकायां संस्थाप्य जिनाज्ञया यद्वाधितं द्वादशान्तात् समानीय तदनु । ॐ ह्रां आत्मन् त्वया जिनाज्ञया अत्र शरीरे संस्थातव्यमिति रेचकेन विन्यस्य कलाविद्यारागप्रभृतिबुद्धिअहङ्कारमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुतेजोजलपृथ्वीलक्षणं साधिपानभिवाहिकं देहं विन्यस्य ॥ तद्यथा ॐ ह्रां कलायै नमः । ॐ ह्रां कलाधिपतये नमः । ॐ कलाधिपास्य

१ आचार्येण इति पाठान्तरम् । २ ॐ क्षुं ह्रीं क्षूं ह्रीं नमः । ॐ जये श्रीं ह्रीं सुभद्रे इँ स्वाहा इत्यन्यत्र ।

* अविद्यानी न्यूनविधि जिनबिम्बं यः स्थापयति मूढमनाः । अभिमानलोभयुक्तो निपतति संसारजलधौ ॥

कर्तृत्वव्यक्तिं कुरु २। ॐ हां विद्यायै नमः। ॐ हां विद्याधिपतये नमः। विद्याधिपास्य ज्ञानाभिव्यक्तिं कुरु २। ॐ हां रागाय नमः। ॐ हां रागाधिपतये नमः। रागाधिपास्य विषयेषु रागं कुरु २। ॐ हां बुद्ध्यै नमः। ॐ हां बुद्ध्यधिपतये नमः। बुद्ध्यधिपास्य बोधं कुरु २। ॐ हां अहङ्काराय नमः। ॐ हां अहङ्काराधिपतये नमः। अहङ्काराधिपास्याभिमानं कुरु २। ॐ हां मनसे नमः। ॐ हां मनोधिपतये चन्द्राय नमः। मनोधिपास्य संकल्पविकल्पं कुरु २। ॐ हां श्रोत्राभ्यां नमः। ॐ हां श्रोत्राधिपतये आदित्याय नमः। श्रोत्राधिपास्य शब्दग्राहकत्वं कुरु २। ॐ हां त्वचे नमः। ॐ हां त्वगधिपतये वायवे नमः। त्वगधिपास्य स्पर्शग्राहकत्वं कुरु २। ॐ हां चक्षुषे नमः। ॐ हां चक्षुरधिपतये रक्ताय नमः। चक्षुरधिपास्य रूपग्राहकत्वं कुरु २। ॐ हां घ्राणाय नमः। ॐ हां घ्राणाधिपतये अश्विभ्यां नमः। घ्राणाधिपास्य गन्धग्राहकत्वं कुरु २। ॐ हां वाचे नमः। ॐ हां वाचाधिपतये अग्नये नमः। वाचाधिपास्य वाचं कुरु २। ॐ हां पाणिभ्यां नमः। ॐ हां पाण्यधिपतये इन्द्राय नमः। पाण्यधिपास्य पदार्थग्राहकत्वं कुरु २। ॐ हां पादाभ्यां नमः। ॐ हां पादाधिपतये विष्णवे नमः। पादाधिपास्य गमनोत्साहं कुरु २। ॐ हां पायवे नमः। ॐ हां पाय्वधिपतये मित्राय नमः। पाय्वधिपास्य वायूत्सर्गं कुरु २। ॐ हां उपस्थाय नमः। ॐ हां उपस्थाधिपतये ब्रह्मणे नमः उपस्थाधिपास्यानन्दं कुरु २। ॐ हां शब्दाय नमः। ॐ हां स्पर्शाय नमः। ॐ हां रूपाय नमः। ॐ हां रसाय नमः। ॐ हां गन्धाय नमः। ॐ हां आकाशाय नमः। ॐ हां वायवे नमः। ॐ हां तेजसे नमः। ॐ हां अद्भ्यो नमः। ॐ हां पृथिव्यै नमः। एवं शेषतत्त्वजातं विन्यस्य

पुनरिडा पिङ्गला सुषमना सावित्री शङ्खिनी कूष्माण्डी यशोवती हस्तिजिह्वा पूषा अलम्बुषाख्यं नाडीदशकं
प्राणापानसमानोदानव्याननागकूर्मकृकदेवदत्तधनञ्जयाख्यवायुदशकं विन्यसेत्। ॐ हां इडायै नमः एवं सर्वा
अपि धनञ्जयान्ता विन्यसेत्। तदन्वाचार्यैः गन्धपुष्पाक्षतादिभिः सम्पूज्य मुद्राभिरालभ्यार्हदाज्ञया प्रासाद-
स्थितिपर्यन्तं त्वया स्थातव्यमित्यनेन मार्गेण धरान्तं निरोधयेत्। ततः शुकनासोर्ध्वं गर्भगृहे खट्वायां हेमाद्येक-
तमं कुम्भं मूर्तिभूतं विन्यस्य मधुघृताभ्यामापूर्य रत्नादिपञ्चकं विन्यस्य चन्दनादिना आलिप्य शुक्ले वाससी परि-
धाप्य रत्नपुरुषं विन्यसेत्। ततो भगवन्तं संपूज्याचार्याणां यथाशक्त्या पूजां विधाय भगवन्तं क्षामयेत्॥ ॥ इति
ध्वजप्रतिष्ठा चतुर्थी॥ ॥ अथ चूलिकादिप्रतिष्ठाविधिः॥ तत्र पूर्ववत् मण्डपवेदिकादिकं विधाय प्रतिष्ठोपयोगिद्रव्य-
जातमानीय भूतबलिं विधाय चैत्यवन्दनं कुर्यात्। तदनु चोत्तरवेदिकायां चूलकं कलशं ध्वजं धर्मचक्रं द्रव्य-
जातं चानीय रत्नौषधिकषायाष्टवर्गमृच्चन्दनसर्वौषध्यादिजलकलशैः संस्थाप्य श्वेते वाससी परिधाप्य अधिवा-
सनामण्डपं प्रदक्षिणीकृत्य पूर्वद्वारेणान्तः प्रविश्य मूलवेदिकायां पर्यङ्के निवेश्य प्रतिमावत् सर्वेषां विधा-
यात्ममन्त्रेण गन्धधूपपुष्पाक्षतादिभिरधिवास्य बलिं निवेदयेत्। तदनु प्रासादं गत्वा कुम्भकजङ्घाशिखरक-
ण्ठामलसारकेषु ब्रह्मपञ्चकं पृथिव्यादीनि च तत्त्वानि विन्यस्य पुष्पाक्षतादिभिर्मूलमन्त्रेण प्रासादमधिवास-
येत्। ततो ध्वजं स्वर्णनेत्रपट्टांशुकादिनिर्मितं कनकघण्टिकाघर्घरिकोपशोभितं विचित्रपुष्पकटकालङ्कृते धूप-

१ सुषुम्ना इति स्यात्।

भादिचिह्निते दण्डे संयोज्य ईशान्यां मण्डलके कुम्भं विन्यस्य तस्योपरि तलिकायां महाध्वजं प्रासादायतिमानं लग्नसमये कृत्वा देशिकः शिल्पी वाऽन्यतमो वा प्रासादं प्रदक्षिणीकृत्य शुभाशयः प्रासादमधिरोहयेत्। ततश्चारुशक्तिं चूलकाधारे रत्नपञ्चकं विन्यस्य वाममार्गानुगामिना प्राणेन चूलकं कलशं ध्वजं धर्मचक्रं च यथाक्रमं स्थापयेत्। ततश्च लग्नसमये ध्वजाधारे रत्नपञ्चकं निक्षिप्य प्रणवासनं दत्वा वामनाडीप्राणेन सहोर्ध्वीभूतं दण्डं मूलमन्त्रेण निवेशयेत्। ततो मुद्रासहिताभिमन्त्रितकलशेन तत्कालोचितफलैर्धान्यैश्च घटमापूर्य कलशस्याभिषेकं कृत्वा श्वेतवाससी परिधापयेत्। तदनु मङ्गलशङ्खतूर्यादिनिर्घोषैर्महाध्वजं प्रसार्य चतुर्विधश्रीश्रमणसङ्घेन स्वबान्धवयुतेन यजमानेन सह प्रदक्षिणात्रयं विधाय आचार्यो ध्वजाग्रं श्रीमद्देवपादमूले संनिरोध्य शान्तिबलिं प्रक्षिप्य देवं सम्पूज्य क्षमापयेत्। तदनुकारापकायध्वजचटापनफलं श्रावयेत्॥ तद्यथा॥ देवस्यायतने भक्त्या ध्वजमारोपयन्ति ये। त्रैलोक्यश्रीस्तनोत्सङ्गे स्वं[1] समारोपयन्ति ते॥ १॥ धत्ते ध्वजोत्र धन्यानां सुरसद्मशिरःस्थितः। तरङ्गिततनुः साक्षात् स्वर्गनिःश्रेणिरूपताम्॥२॥ यावन्तः प्राणिनस्तत्र लग्नाः कुर्युः प्रदक्षिणाः। तावन्तः प्राप्नुवन्त्यत्र शिवस्थानकमुत्तमम्॥ ३॥ स च श्रुत्वा कृतकृत्यमात्मानं मन्यमानो देवगुरुसङ्घपूजां विधाय दीनानाथानां चानुकम्पया स्वविभवानुरूपमन्नदानादिकं दद्यादिति॥ दण्डं च नूतनं वेणुमयं अव्यङ्गं सत्वचं सरलं शुभदेशजं प्रवर्धमानपर्व सर्वलक्षणसंयुतमाचार्यो गृहीत्वा देव-

१ त्वामिति पाठान्तरम्।

प्रासादमानेन प्रमाणं परिकल्पयेत् । तच्च हस्तात्प्रभृति नवहस्तपर्यन्तेषु प्रतिमाप्रासादेषु चतुष्करादारभ्य त्रिवृद्ध्या दण्डप्रमाणमवसेयम् । ध्वजं चायामतो जङ्घार्धलम्बिजङ्घान्तं दण्डप्रमाणं च कर्तव्यम् । विस्तरतस्तु दशाद्यावत्षोडशाङ्गुल इति । मुक्ते हस्तोच्छ्रिते कलशात्कर्ता रोगातङ्कवर्जितः स्यात् । द्विहस्तोच्छ्रिते बहुप्रजो भवति । त्रिहस्तोच्छ्रिते धनधान्यैर्वर्धते । चतुर्हस्तोच्छ्रिते नृपवृद्धिः । पञ्चहस्तोच्छ्रिते सुभिक्षं राष्ट्रवृद्धिश्चेति । तथा प्राच्यां गते कर्ता सर्वकामावाप्तिं आग्नेय्यां तापं याम्यां व्याधिभयं नैर्ऋत्यां रोगातङ्कं वारुण्यां मित्रभावं वायव्यां धान्यसम्पदं उदीच्यां धनलाभं ऐशान्यामायुर्वृद्धिं प्राप्नोतीति ॥ तत्राशुभाशागते केतौ नमस्कारसहस्रं जपित्वा विशेषपूजां विधाय शान्तिं कुर्यात् ॥ इति शङ्कुप्रतिष्ठा पञ्चमी ॥

॥ अथ वेदिकालक्षणम् ॥ तत्र नन्दा सुनन्दा प्रबुद्धा सुप्रभा सुमङ्गला कुमुदमाला विमला पुण्डरीकिण्याख्या अष्टवेदिकाः । तत्रायामविस्ताराभ्यां हस्तप्रमाणा चतुरङ्गुलोच्छ्रया नन्दा । शेषास्तु विष्कम्भायामयोर्यथोत्तरं ह्रासवृद्ध्या पिण्डे चतुरङ्गुलाधिक्येनोत्तरोत्तरप्रवृद्धाः स्युः । तासां च मध्ये पूर्ववच्चतुरस्रं क्षेत्रं संसाध्य नन्दादिष्वेकतमां विचित्रमणिमयेन रजसा वेदिकां निष्पाद्य तत्कोणेषु ब्राह्मणक्षत्रियवैश्यशूद्राणां यथाक्रमं पलाशन्यग्रोधोदुम्बरशमीमयान् कीलकान्निवेशयेत् । यद्वा सर्वेषां वर्णानां वंशमयाः शस्तास्ते सर्वेऽप्येकदारुमया निर्व्रणा ऊर्ध्वशाखाश्रिता राजिकोटरवर्जिता निर्ग्रन्थयो द्वादशाङ्गुलप्रमाणाः कर्तव्याः । तेच काष्ठलोष्ठलोहाश्मभिर्न हन्तव्याः । वेधश्च त्याज्यः ॥ इति वेदिकालक्षणम् ॥

## ॥ अथ जीर्णोद्धारविधिः ॥

॥ तत्र खण्डितस्फुटितभग्नवलितपतितजीर्णदग्धसगर्भव्रणदूषितन्यूनाधिकवक्रविकरालभीषणदोषदुष्टं मन्त्रासन्निधानात् पिशाचादीनामधिष्ठानभूतं बिम्बमुद्धृत्य बिम्बान्तरं प्रतिष्ठापयेत्। मन्त्राचार्यः[1] प्रातरुत्थाय कृतशौचस्नानविधिर्विहितसकलीकरणः खण्डितस्फुटितभग्नादिकारणैर्बिम्बान्तरं[2] कर्तुकामः शान्त्यर्थं दिक्पालानां बलिं दद्यात्। ततः ॐ इन्द्राय प्रतिगृह्ण स्वाहा। ॐ अग्नये प्रतिगृह्ण स्वाहा। ॐ यमाय प्रतिगृह्ण स्वाहा। ॐ नैर्ऋतये प्रतिगृह्ण स्वाहा। ॐ वरुणाय प्रतिगृह्ण स्वाहा। ॐ वायवे प्रतिगृह्ण स्वाहा। ॐ कुबेराय प्रतिगृह्ण स्वाहा। ॐ ईशानाय प्रतिगृह्ण स्वाहा। ॐ ब्रह्मणे प्रतिगृह्ण स्वाहा। ॐ नागाय प्रतिगृह्ण स्वाहा। इति स्वस्वदिक्षु यथाक्रमं बहिर्बलिं प्रक्षिप्य वायव्यां ॐ क्षं क्षेत्रपालाय स्वाहेति क्षेत्रपालाय बलिं दत्वा। ॐ सर्वभूतेभ्यो वषट् स्वाहेति भूतादीन् संतर्प्य चैत्यादिवन्दनं कृत्वा मण्डलसमीपमागत्य स्वासनं प्रणवेन संपूज्य समुपविश्य भूतशुद्धिं सकलीकरणं विशेषार्घपात्रद्रव्यशुद्धिं कृत्वा आसनपूजाप्रभृत्यावाहनान्तं कर्म कृत्वाऽर्घपाद्याचमनीयानि दत्वा नित्यविधिना साङ्गं भगवन्तं सम्पूज्य। ततः प्राच्यां। ॐ इन्द्राय स्वाहा। ॐ वज्राय स्वाहा। आग्नेय्यां ॐ अग्नये स्वाहा। ॐ शक्तये स्वाहा। याम्यायां ॐ यमाय स्वाहा। ॐ दण्डाय स्वाहा। नैर्ऋत्यां ॐ नैर्ऋतये स्वाहा। ॐ खड्गाय स्वाहा। वारुण्यां ॐ वरुणाय स्वाहा। ॐ पाशाय स्वाहा। वायव्यां ॐ वायवे स्वाहा।

१ तत्राचार्य इति पाठान्तरम्। २ खण्डितभग्नादि इति पाठः।

ॐ ध्वजाय स्वाहा । उत्तरस्यां ॐ कुबेराय स्वाहा । ॐ गदायै स्वाहा । ऐशान्यां ॐ ईशानाय स्वाहा । ॐ शू-
लाय स्वाहा । अत्रैव ॐ ब्रह्मणे स्वाहा । ॐ पद्माय स्वाहा । नैर्ऋत्यां ॐ नागाय स्वाहा । ॐ उत्तराय स्वाहा ।
एवं सास्त्राँल्लोकपालान् संपूज्य तदनु भो भोः शक्र त्वया स्वस्यां दिशि विघ्नप्रशान्तये सावधानेन शान्ति-
कर्मान्तं यावद्भगवदाज्ञया स्थातव्यमित्यनेन क्रमेण सर्वलोकपालान् भगवदाज्ञां श्रावयन्नक्षदुर्गमनुस्मरन्
मण्डपस्याभ्यन्तरे समन्तादर्घाम्भसां सेचनेन विघ्नोचाटनं विधाय देवसन्निधिं गत्वा सम्पूज्य प्रातिलोम्येन
विसर्जनार्थमर्घं दत्वा भगवन्तं बिम्बमिदमशेषदोषावहमस्य चोद्धारे सति शान्तिः स्यादिति भगवतोक्तं ।
अतोऽस्य समुद्धाराय समुद्यतं मामधितिष्ठैवं कुर्विति लब्धानुज्ञो हेमाद्येकतमं कुम्भमानीय गालिताम्भसा प्रपूर्य
चन्दनपुष्पाक्षतैः सम्पूज्य मूलमन्त्रेणाभिमन्त्र्य मुद्राभिरालभ्य देवं स्नपयेत् । तदनु बिम्बसंचालनार्थं साहस्रिकं
जपं कृत्वा सुवर्णपुष्पाणामष्टोत्तरशतेन बिम्बस्य पूजां विधाय प्रतिमासमीपमागत्य प्रतिमाङ्गस्थितं सत्वं
श्रावयेत् ॥ प्रतिमारूपमास्थाय येनादौ समधिष्ठिता । स शीघ्रं प्रतिमां त्यक्त्वा यातु स्थानं समीहितम् ॥ इति
एवमुक्त्वा ॐ विसर २ स्वस्थानं गच्छेत्यनेन मन्त्रेणार्घं दत्वा प्रतिमाधिष्ठायकं देवविशेषं विसर्जयेत् । ततो
हेमेन रानिश्रेणाक्षाभिमश्रितेनोत्थाप्य हेमपाशया रज्ज्वा शिखायां प्रतिमां सन्नह्य गजादिस्कन्धं संयोज्य
लोकैः सह शान्तिर्भवत्विति वहिर्देवं नीत्वा शैलमयं बिम्बमगाधेऽम्भसि शिखरिणि वा क्षिपेत् । तथा मृन्मयं

१ नागाय इति स्यात् । २ म्भसा इति ख. पाठः । ३ विघ्नोद्घाटनं इति पाठान्तरम् । ४ गजादेः स्कन्धमिति पाठान्तरम् ।

रत्नमयं वाअग्न्यादिदग्धमपि रत्नजं स्वतेजःस्थानवियुक्तं पूर्ववत् प्रतिष्ठापयेत् । सुवर्णादिलोहमयं तदेव समं विधाय तत्रैव स्थापयेत् । अनेनैव विधिना चूलकध्वजप्रासादादिकं वा दोषयुक्तं विसर्जयेत् ॥ प्रासादे चायं विशेषः ॥ प्रासादे मन्त्रानङ्गे समायोज्य बिम्बं संरक्ष्य प्रासादनिष्पत्तिपर्यन्तं षडङ्गं संपूजयेत् । निष्पन्ने च प्रासादे षडङ्गमन्त्रान् संहृत्य समुदायेन यथास्थानं मन्त्रन्यासः कार्य इति जीर्णोद्धारं विधाय प्रायश्चित्तजपं कुर्यात् । तदनु आचार्याणां दक्षिणां दत्वा क्षमस्वेति विसर्जयेत् । एवं जीर्णबिम्बादिकमुद्धृत्य तन्मयं तत्प्रमाणं तदाकारं अन्यत् बिम्बादिकं यथोक्तविधिना प्रतिष्ठापयेत् ॥ इति जीर्णोद्धारविधिः ॥

## ॥ अथ मुद्राविधिः ॥

तत्र दक्षिणाङ्गुष्ठेन तर्जनीमध्यमे समाक्रम्य पुनर्मध्यमामोक्षणेन नाराचमुद्रा ॥ १ ॥ किञ्चिदाकुञ्चिताङ्गुलीकस्य वामहस्तोपरि शिथिलमुष्टिदक्षिणकरस्थापनेन कुम्भमुद्रा ॥ २ ॥ इति शुद्धिमुद्राद्वयं ॥ बद्धमुष्ट्योः करयोः संलग्नसन्मुखाङ्गुष्ठयोः हृदयमुद्रा ॥१॥ तावेव मुष्टी समीकृतोर्ध्वाङ्गुष्ठौ शिरसि विन्यसेदिति शिरोमुद्रा ॥ २॥ पूर्ववत् मुष्टी बध्वा तर्जन्यौ प्रसारयेदिति शिखामुद्रा ॥ ३ ॥ पुनर्मुष्टिबन्धं विधाय कनीयस्यङ्गुष्ठौ प्रसारयेदिति कवचमुद्रा ॥ ४ ॥ कनिष्ठिकामङ्गुष्ठेन संपीड्य शेषाङ्गुलीः प्रसारयेदिति क्षुरप्रमुद्रा ॥ ५ ॥ दक्षिणकरेण मुष्टिं बध्वा तर्जनीमध्यमे प्रसारयेदिति अस्त्रमुद्रा ॥ ६ ॥ एता हृदयादीनां विन्यसनमुद्राः ॥ प्रसारिताधोमुखाभ्यां हस्ताभ्यां पादाङ्गुलीतलामस्तकस्पर्शान्महामुद्रा ॥ १ ॥ अन्योन्यग्रन्थिताङ्गुलीषु कनिष्ठिकानामिकयो-

मध्यमातर्जन्योश्च संयोजनेन गोस्तनाकारा धेनुमुद्रा ॥ २ ॥ हस्ताभ्यामञ्जलिं कृत्वा प्रकाममूलपर्वाङ्गुष्ठसंयोजनेनावाहनीमुद्रा ॥ ३ ॥ इयमेवाधोमुखी स्थापनी ॥ ४ ॥ संलग्नमुष्ट्युच्छ्रिताङ्गुष्ठौ करौ संनिधानी[1] ॥ ५ ॥ तावेव गर्भगाङ्गुष्ठौ निष्ठुरा ॥ ६ ॥ एता आवाहनादिमुद्राः ॥ बद्धमुष्टेर्दक्षिणहस्तस्य मध्यमातर्जन्योर्विस्फारितप्रसारणेन गोष्टपमुद्रा ॥१॥ बद्धमुष्टेर्दक्षिणहस्तस्य प्रसारिततर्जन्या वामहस्ततलताडनेन त्रासनीमुद्रा ॥२॥ एते नेत्रास्त्रयोः पूजामुद्रे ॥ अङ्गुष्ठे तर्जनीं संयोज्य शेपाङ्गुलीप्रसारणेन पाशमुद्रा ॥१॥ बद्धमुष्टेर्वामहस्तस्य तर्जनीं प्रसार्य किंचिदाकुञ्चयेदित्यङ्कुशमुद्रा ॥ २ ॥ संहतोर्ध्वाङ्गुलिवामहस्तमूले चाङ्गुष्ठं तिर्यग्विधाय तर्जनीचालनेन ध्वजमुद्रा ॥३॥ दक्षिणहस्तमुत्तानं विधायाधःकरशाखां प्रसारयेदिति वरदमुद्रा ॥४॥ एता जयादिदेवतानां पूजामुद्राः ॥ वामहस्तेन मुष्टिं बध्वा कनिष्ठिकां प्रसार्य शेपाङ्गुली कराङ्गुष्ठेन पीडयेदिति शङ्खमुद्रा ॥ १ ॥ परस्पराभिमुखहस्ताभ्यां वेणीबन्धं विधाय मध्यमे प्रसार्य संयोज्य च शेषाङ्गुलीभिर्मुष्टी[2] बन्धयेदिति शक्तिमुद्रा ॥२॥ हस्तद्वयेनाङ्गुष्ठतर्जनीभ्यां वलके विधाय परस्परान्तःप्रवेशनेन शृङ्खलामुद्रा[3] ॥ ३ ॥ वामहस्तस्योपरि दक्षिणकरं कृत्वा कनिष्ठिकाङ्गुष्ठाभ्यां मणिबन्धं संवेष्ट्य शेपाङ्गुलीनां विस्फारितप्रसारणेन वज्रमुद्रा ॥ ४ ॥ वामहस्ततले दक्षिणहस्तमूलं संनिवेश्य करशाखा विरलीकृत्य प्रसारयेदिति चक्रमुद्रा ॥ ५ ॥ पद्माकारौ करौ कृत्वा मध्येऽङ्गुष्ठौ कर्णिकाकारौ विन्यसेदिति पद्ममुद्रा ॥६॥ वामहस्तमुष्टेरुपरि दक्षिणमुष्टिं कृत्वा गात्रेण सह किञ्चि-

१ संनिधापनी इति स्यात् । २ मुष्टिं इति ख. ङ. पाठः । ३ शङ्खलमुद्रा इति पाठः ।

दुन्नामयेदिति गदामुद्रा ॥ ७ ॥ अधोमुखवामहस्ताङ्गुलीर्घण्टाकाराः प्रसार्य दक्षिणेन मुष्टिं बध्वा तर्जनीमूर्ध्वां कृत्वा वामहस्ततले नियोज्य घण्टावचालनेन घण्टामुद्रा ॥ ८ ॥ उन्नतपृष्ठहस्ताभ्यां संपुटं कृत्वा कनिष्ठिके निष्कास्य योजयेदिति कमण्डलुमुद्रा ॥ ९ ॥ पताकावत् हस्तं प्रसार्य अङ्गुष्ठयोजनेन परशुमुद्रा ॥ १० ॥ यद्वा पताकाकारं दक्षिणकरं संहताङ्गुलिं कृत्वा तर्जन्यङ्गुष्ठाक्रमणेन परशुमुद्रा द्वितीया ॥ ११ ॥ ऊर्ध्वदण्डौ करौ कृत्वा पद्मवत् करशाखाः प्रसारयेदिति वृक्षमुद्रा ॥ १२॥ दक्षिणहस्तं संहताङ्गुलिमुन्नमय्य सर्पफणावत् किञ्चिदाकुञ्चयेदिति सर्पमुद्रा ॥ १३ ॥ दक्षिणकरेण मुष्टिं बद्ध्वा तर्जनीमध्यमे प्रसारयेदिति खड्गमुद्रा ॥ १४ ॥ हस्ताभ्यां संपुटं विधायाङ्गुलीः पद्मवद्विकास्य मध्यमे परस्परं संयोज्य तन्मूललग्नाङ्गुष्ठौ कारयेदिति ज्वलनमुद्रा ॥१५॥ बद्धमुष्टेर्दक्षिणकरस्य मध्यमाङ्गुष्ठतर्जन्योस्तलान्मूलाक्रमेण प्रसारयेदिति श्रीमणिमुद्रा ॥ १६ ॥ एताः षोडशविद्यादेवीनां मुद्राः ॥ ॥ दक्षिणहस्तेन मुष्टिं बद्ध्वा तर्जनीं प्रसारयेदिति दण्डमुद्रा ॥ १ ॥ परस्परोन्मुखौ मणिबन्धाभिमुखकरशाखौ करौ कृत्वा ततो दक्षिणाङ्गुष्ठकनिष्ठिकाभ्यां वाममध्यमानामिके तर्जनीं च तथा वामाङ्गुष्ठकनिष्ठिकाभ्यामितरस्य मध्यमानामिके तर्जनीं समाक्रमयेदिति पाशमुद्रा ॥२॥ परस्पराभिमुखमूर्ध्वाङ्गुल्यौ करौ कृत्वा तर्जनीमध्यमानामिका विरलीकृत्य परस्परं संयोज्य कनिष्ठिकाङ्गुष्ठौ पातयेदिति शूलमुद्रा ॥३॥ यद्वा पताकाकारं करं कृत्वा कनिष्ठिकामङ्गुष्ठेनाक्रम्य शेषाङ्गुलीः प्रसारयेदिति शूलमुद्रा द्वितीया ॥ ४ ॥ एताः

१ दक्षिणमुष्टिं इति पाठः ।

पूर्वोक्ताभिः सह दिक्पालानां मुद्राः ॥ ॥ ग्राह्यस्योपरि हस्तं प्रसार्य कनिष्ठिकादितर्जन्यन्तानामङ्गुलीनां क्रमसङ्कोचनेनाङ्गुष्ठमूलानयनात् संहारमुद्रा विसर्जनमुद्रेयम् ॥ उत्तानहस्तद्वयेन वेणीबन्धं विधायाङ्गुष्ठाभ्यां कनिष्ठिके तर्जनीभ्यां च मध्यमे संगृह्यानामिके समीकुर्यादिति परमेष्ठिमुद्रा ॥१॥ यद्वा वामकराङ्गुलीरूर्ध्वीकृत्य मध्यमां मध्यमे कुर्यादिति द्वितीया ॥ २ ॥ पराङ्मुखहस्ताभ्यां वेणीबन्धं विधायाभिमुखीकृत्य तर्जन्यौ संश्लेष्य शेषाङ्गुलिमध्ये अङ्गुष्ठद्वयं विन्यसेदिति पार्श्वमुद्रा ॥३॥ एता देवदर्शनमुद्राः ॥ ॥ इदानीं प्रतिष्ठोपयोगिमुद्राः । उत्तानौ किञ्चिदाकुञ्चितकरशाखौ पाणी विधारयेदिति अञ्जलिमुद्रा ॥ १ ॥ अभयाकारौ समश्रेणिस्थिताङ्गुलीकौ करौ विधायाङ्गुष्ठयोः परस्परग्रथनेन कपाटमुद्रा ॥ २ ॥ चतुरङ्गुलमग्रतः पादयोरन्तरं किञ्चिन्न्यूनं च पृष्ठतः कृत्वा समपादकायोत्सर्गेण जिनमुद्रा ॥३॥ परस्पराभिमुखौ ग्रथिताङ्गुलीकौ करौ कृत्वा तर्जनीभ्यामनामिके गृहीत्वा मध्यमे प्रसार्य तन्मध्येऽङ्गुष्ठद्वयं निक्षिपेदिति सौभाग्यमुद्रा ॥ ४ ॥ वामहस्ताङ्गुलितर्जन्या कनिष्ठिकामाक्रम्य तर्जन्यग्रं मध्यमया कनिष्ठिकाग्रं पुनरनामिकया आकुञ्च्य मध्येऽङ्गुष्ठं निक्षिपेदिति योनिमुद्रा ॥ ५ ॥ आत्मनोऽभिमुखदक्षिणहस्तकनिष्ठिकया वामकनिष्ठिकां संगृह्याधःपरावर्तितहस्ताभ्यां गरुडमुद्रा ॥ ६ ॥ संलग्नौ दक्षिणाङ्गुष्ठाक्रान्तवामाङ्गुष्ठपाणीति नमस्कृतिमुद्रा ॥ ७ ॥ किञ्चित् गर्भितौ हस्तौ समौ विधाय ललाटदेशयोजनेन मुक्ताशुक्तिमुद्रा ॥ ८ ॥ जानुहस्तोत्तमाङ्गादिसंप्रणिपातेन प्रणिपातमुद्रा ॥ ९ ॥ संमुखहस्ताभ्यां वेणीबन्धं विधाय मध्यमाङ्गुष्ठकनिष्ठिकानां परस्परयोजनेन त्रिशिखमुद्रा ॥ १० ॥ पराङ्मुखहस्ताभ्यामङ्गुलीर्वि-

दर्भ्य मुष्टिं बध्वा तर्जन्यौ समीकृत्य प्रसारयेदिति भृङ्गारमुद्रा ॥ ११ ॥ वामहस्तमणिबन्धोपरि पराङ्मुखं दक्षिणकरं कृत्वा करशाखा विदर्भ्य किञ्चिद्वामवलनेनाधोमुखाङ्गुष्ठाभ्यां मुष्टिं बध्वा समुत्क्षिपेदिति योगिनीमुद्रा ॥ १२॥ ऊर्ध्वशाखं वामपाणिं कृत्वाऽङ्गुष्ठेन कनिष्ठिकामाक्रमयेदिति क्षेत्रपालमुद्रा ॥ १३ ॥ दक्षिणकरेण मुष्टिं बध्वा कनिष्ठिकाङ्गुष्ठौ प्रसार्य डमरुकवच्चालयेदिति डमरुकमुद्रा ॥ १४ ॥ दक्षिणहस्तेनोर्ध्वाङ्गुलिना पताकाकारेणाभयमुद्रा ॥ १५ ॥ तेनैवाधोमुखेन वरदा ॥ १६ ॥ वामहस्तस्य मध्यमाङ्गुष्ठयोजनेन अक्षसूत्रमुद्रा ॥ १७ ॥ बद्धमुष्टेर्दक्षिणहस्तस्य प्रसारिततर्जन्या वामहस्ततलताडनेन त्रासनी ॥१८॥ पद्ममुद्रेव प्रसारिताङ्गुष्ठसंलग्नमध्यमाङ्गुल्यग्रा बिम्बमुद्रा[1] ॥ १९ ॥ एताः सामान्यमुद्राः ॥ इति मुद्राविधिः ॥

## ॥ अथ प्रायश्चित्तविधिः ॥

तत्र श्रेष्ठबिम्बे नष्टे दग्धे तस्करादिहृते मूलमन्त्रस्य लक्षं जपित्वा बिम्बान्तरप्रतिष्ठापनेन शुद्ध्यति। हस्तात्पतिते व्यङ्गे दशसहस्रं जपित्वा पुनः पूजां कुर्यात्। द्विहस्तात्पतिते व्यङ्गे लक्षमेकं जपित्वा पुनः संस्कारेण शुद्ध्यति। पुरुषमात्रात्पतिते प्रयत्नपूर्वं सशलाके सर्वतो विशीर्णे प्रायश्चित्तं नास्तीति। अस्यायमर्थः—शलाकाभेदघातस्यातिगुरुत्वान्न प्रतिमादिना भवितव्यम्। स्थण्डिलेऽप्यावाहनादिषु[2] समासे पूजाकर्मण्यविसर्जित एव देवेशे[3] प्रमादादुपघाते जाते अर्चापुष्पादिभ्यो मन्त्रान् संहृत्य सहस्रपञ्चकं जपित्वा साधून् भोजयेत्। देवो-

१ विश्वमुद्रा इत्यन्यत्र। २ अथावाहनादिषु इति ख. ग. पाठः। ३ दैवेन इति ग. पाठः।

पकरणं पादेन स्पृष्ट्वा शतपञ्चकं जपेत् । सन्ध्यालोपे नीरुजः सोपवासं शतं जपेत् । सरुजः शतं जपेदेव । एकाहं देवस्यानर्चने त्रिरात्रमुपोषितः प्रत्यहं त्रिशतं जपेत् । निर्माल्यभक्षणे त्वकामान्नमस्कारायुतं (दशसहस्रं) जपेत् । ततो विशेषपूजया तपस्विदानेन शुद्ध्यति । कामतो लक्षं नमस्कारस्यावर्त्योपवासपञ्चकं कुर्यात् । निर्माल्यभेदाः कथ्यन्ते ॥ देवस्वं देवद्रव्यं नैवेद्यं निवेदितं निर्माल्यं चेति । देवसम्बन्धिग्रामादि देवस्वं । अलंकारादि देवद्रव्यम् । देवार्थमुपकल्पितं नैवेद्यम् । तदेवोत्सृष्टं निवेदितं । बहिर्निक्षिप्तं निर्माल्यम् । पञ्चविधमपि निर्माल्यं न जिघ्रेन्नावलङ्घयेत् न च दद्यान्न विक्रीणीत । दत्वा क्रव्यादो भवति भुक्त्वा मातङ्गो लङ्घने सिद्धिहानिः आघ्राणे वृक्षः स्पर्शने स्त्रीत्वं विक्रये शबरः । पूजायां दीपालोकनधूपान्नादिगन्धे न दोषः । नदीप्रवाहनिर्माल्येऽपि च । सूतकशावाशौचयोः परकीययोर्न भोक्तव्यम् । भुक्त्वा वा अकामतः समुपोष्य मन्त्रसहस्रं जपेत् । कामतस्तूपवासत्रयं कृत्वा मूलमन्त्रं सहस्रत्रयमावर्तयेत् । आत्मसम्बन्धिनोः सूतकशावाशौचयोः सूतकिजनसंस्पर्शं विधाय पृथक्पाकेन भोक्तव्यमन्यथा नित्यहानिर्भवति । अथ सूतके शावाशौचे च सुधर्मस्थेन क्रियानुष्ठानपरेण ज्ञानवता वृत्तवता च न नित्यक्षतिः कार्या । यदि च नित्यानुष्ठानं न भवति प्रमादात् सूतकिसंसृष्टासाधारणपाकभोजनं वा तदा स उपोष्य सहस्रं जपेत् । कामतस्त्रिगुणं तदेव । आह्निकदेवतार्चनादिलोपे मूलमन्त्रस्यायुतं जपेत् । समुपोष्य शतं वा जपेत् ॥ इति प्रायश्चित्तविधिः ॥

## ॥ अथार्हदादीनां वर्णादिक्रमविधिः ॥

तत्राद्यं कनकावदातवृषलाञ्छनमुत्तराषाढाजातं धनूराशिं चेति । तथा तत्तीर्थोत्पन्नगोमुखयक्षं हेमवर्णगजवाहनं चतुर्भुजं वरदाक्षसूत्रयुतदक्षिणपाणिं मातुलिङ्गपाशान्वितवामपाणिं चेति । तथा तस्मिन्नेव तीर्थे समुत्पन्नामप्रतिचक्राभिधानां यक्षिणीं हेमवर्णां गरुडवाहनामष्टभुजां वरदबाणचक्रपाशयुक्तदक्षिणकरां धनुर्वज्रचक्राङ्कुशवामहस्तां चेति ॥ १ ॥ ॥ द्वितीयमजितस्वामिनं हेमाभं गजलाञ्छनं रोहिणीजातं वृषराशिं चेति । तथा तत्तीर्थोत्पन्नं महायक्षाभिधानं यक्षेश्वरं चतुर्मुखं श्यामवर्णं मातङ्गवाहनमष्टपाणिं वरदमुद्गराक्षसूत्रपाशान्वितदक्षिणपाणिं बीजपूरकाभयाङ्कुशशक्तियुक्तवामपाणिपल्लवं चेति । तथा तस्मिन्नेव तीर्थे समुत्पन्नामजिताभिधानां यक्षिणीं गौरवर्णां लोहासनाधिरूढां चतुर्भुजां वरदपाशाधिष्ठितदक्षिणकरां बीजपूरकाङ्कुशयुक्तवामकरां चेति॥२॥ ॥ तथा तृतीयं सम्भवनाथं हेमाभं अश्वलाञ्छनं मृगशिरजातं मिथुनराशिं चेति। तस्मिंस्तीर्थे समुत्पन्नं त्रिमुखयक्षेश्वरं त्रिमुखं त्रिनेत्रं श्यामवर्णं मयूरवाहनं षड्भुजं नकुलगदाभययुक्तदक्षिणपाणिं मातुलिङ्गनागाक्षसूत्रान्वितवामहस्तं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां दुरितारिदेवीं गौरवर्णां मेषवाहनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां फलाभयान्वितवामकरां चेति ॥३॥ ॥ तथा चतुर्थमभिनन्दनजिनं कनकद्युतिं कपिलाञ्छनं श्रवणोत्पन्नं मकरराशिं चेति । तत्तीर्थोत्पन्नमीश्वरयक्षं श्यामवर्णं गजवाहनं चतुर्भुजं मातुलिङ्गाक्षसूत्रयुतदक्षिणपाणिं नकुलाङ्कुशान्वितवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां कालिकादेवीं श्यामवर्णां

चतुर्भुजां वरदपाशाधिष्ठितदक्षिणभुजां नागाङ्कुशान्वितवामकरां चेति ॥ ४ ॥ ॥ तथा पञ्चमं सुमति-जिनं हेमवर्णं क्रौञ्चलाञ्छनं मघोत्पन्नं सिंहराशिं चेति । तत्तीर्थोत्पन्नं तुम्बरुयक्षं गरुडवाहनं चतुर्भुजं वरदशक्तियुतदक्षिणपाणिं नागपाशयुक्तवामहस्तं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां महाकालीं देवीं सुवर्णवर्णां पद्मवाहनां चतुर्भुजां वरदपाशाधिष्ठितदक्षिणकरां मातुलिङ्गाङ्कुशयुक्तवामभुजां चेति ॥ ५ ॥ ॥ तथा षष्ठं पद्मप्रभं रक्तवर्णं कमललाञ्छनं चित्रानक्षत्रजातं कन्याराशिं चेति । तत्तीर्थोत्पन्नं कुसुमं यक्षं नीलवर्णं कुरङ्गवाहनं चतुर्भुजं फलाभययुक्तदक्षिणपाणिं नकुलकाक्षसूत्रयुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नामच्युतां देवीं श्यामवर्णां नरवाहनां चतुर्भुजां वरदवीणान्वितदक्षिणकरां कार्मुकाभययुतवामहस्तां चेति ॥ ६ ॥ ॥ तथा सप्तमं सुपार्श्वं हेमवर्णं स्वस्तिकलाञ्छनं विशाखोत्पन्नं तुलाराशिं चेति । तत्तीर्थोत्पन्नं मातङ्गयक्षं नीलवर्णं गजवाहनं चतुर्भुजं विल्वपाशयुक्तदक्षिणपाणिं नकुलकाङ्कुशान्वितवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां शान्तादेवीं सुवर्णवर्णां गजवाहनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां शूलाभययुतवामहस्तां चेति ॥७॥ ॥ तथा-ष्टमं चन्द्रप्रभजिनं धवलवर्णं चन्द्रलाञ्छनं अनुराधोत्पन्नं वृश्चिकराशिं चेति । तत्तीर्थोत्पन्नं विजययक्षं हरितवर्णं त्रिनेत्रं हंसवाहनं द्विभुजं दक्षिणहस्ते चक्रं वामे मुद्गरमिति । तस्मिन्नेव तीर्थे समुत्पन्नां भृकुटिदेवीं पीतवर्णां वराह( विडाल )वाहनां चतुर्भुजां खड्गमुद्गरान्वितदक्षिणभुजां फलकपरशुयुतवामहस्तां चेति ॥ ८ ॥

१ बाण इति पाठान्तरम् । २ विराल इति पाठान्तरम् ।

॥ तथा नवमं सुविधिजिनं धवलवर्णं मकरलाञ्छनं मूलनक्षत्रजातं धनूराशिं चेति। तत्तीर्थोत्पन्नमजितयक्षं श्वेतवर्णं कूर्मवाहनं चतुर्भुजं मातुलिङ्गाक्षसूत्रयुक्तदक्षिणपाणिं नकुलकुन्तान्वितवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां सुतारादेवीं गौरवर्णां वृषवाहनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणभुजां कलशाङ्कुशान्वितवामपाणिं चेति ॥९॥

॥ तथा दशमं शीतलनाथं हेमाभं श्रीवत्सलाञ्छनं पूर्वाषाढोत्पन्नं धनूराशिं चेति । तस्मिंस्तीर्थे समुत्पन्नं ब्रह्मयक्षं चतुर्मुखं त्रिनेत्रं धवलवर्णं पद्मासनमष्टभुजं मातुलिङ्गमुद्गरपाशाभययुक्तदक्षिपाणिं नकुलकगदाङ्कुशाक्षसूत्रान्वितवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां अशोकां देवीं मुद्गवर्णां पद्मवाहनां चतुर्भुजां वरदपाशयुक्तदक्षिणकरां फलाङ्कुशयुक्तवामकरां चेति ॥१०॥

॥ तथैकादशं श्रेयांसं हेमवर्णं गण्डकलाञ्छनं श्रवणोत्पन्नं मकरराशिं चेति । तत्तीर्थोत्पन्नमीश्वरयक्षं धवलवर्णं त्रिनेत्रं वृषभवाहनं चतुर्भुजं मातुलिङ्गगदान्वितदक्षिणपाणिं नकुलकाक्षसूत्रयुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां मानवीं देवीं गौरवर्णां सिंहवाहनां चतुर्भुजां वरदमुद्गरान्वितदक्षिणपाणिं कलशाङ्कुशयुक्तवामकरां चेति ॥ ११ ॥

॥ तथा द्वादशं वासुपूज्यं रक्तवर्णं महिषलाञ्छनं शतभिषजि जातं कुम्भराशिं चेति । तत्तीर्थोत्पन्नं कुमारयक्षं श्वेतवर्णं हंसवाहनं चतुर्भुजं मातुलिङ्गबाणान्वितदक्षिणपाणिं नकुलकधनुर्युक्तवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां प्रचण्डादेवीं श्यामवर्णां अश्वारूढां चतुर्भुजां वरदशक्तियुक्तदक्षिणकरां पुष्पगदायुक्तवामपाणिं चेति ॥ १२ ॥

॥ तथा त्रयोदशं विमलनाथं कनकवर्णं वराहलाञ्छनं उत्तरभाद्रपदाजातं मीनराशिं चेति । तत्तीर्थोत्पन्नं षण्मुखं यक्षं श्वेतवर्णं

शिखिवाहनं द्वादशभुजं फलचक्रबाणखड्गपाशाक्षसूत्रयुक्तदक्षिणपाणिं नकुलचक्रधनुःफलकाङ्कुशाभययुक्तवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां विदितां देवीं हरितालवर्णां पद्मारूढां चतुर्भुजां बाणपाशयुक्तदक्षिणपाणिं धनुर्नागयुक्तवामपाणिं चेति ॥ १३ ॥ ॥ तथा चतुर्दशं अनन्तं जिनं हेमवर्णं श्येनलाञ्छनं स्वातिनक्षत्रोत्पन्नं तुलाराशिं चेति। तत्तीर्थोत्पन्नं पातालयक्षं त्रिमुखं रक्तवर्णं मकरवाहनं षड्भुजं पद्मखड्गपाशयुक्तदक्षिणपाणिं नकुलफलकाक्षसूत्रयुक्तवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां अङ्कुशां देवीं गौरवर्णां पद्मवाहनां चतुर्भुजां खड्गपाशयुक्तदक्षिणकरां चर्मफलकाङ्कुशयुतवामहस्तां चेति ॥ १४ ॥ ॥ तथा पञ्चदशं धर्मजिनं कनकवर्णं वज्रलाञ्छनं पुष्योत्पन्नं कर्कराशिं चेति। तत्तीर्थोत्पन्नं किंनरयक्षं त्रिमुखं रक्तवर्णं कूर्मवाहनं षड्भुजं बीजपूरकगदाभययुक्तदक्षिणपाणिं नकुलपद्माक्षमालायुक्तवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां कन्दर्पां देवीं गौरवर्णां मत्स्यवाहनां चतुर्भुजां उत्पलाङ्कुशयुक्तदक्षिणकरां पद्माभययुक्तवामहस्तां चेति ॥ १५ ॥ ॥ तथा षोडशं शान्तिनाथं हेमवर्णं मृगलाञ्छनं भरण्यां जातं मेषराशिं चेति। तत्तीर्थोत्पन्नं गरुडयक्षं वराहवाहनं क्रोडवदनं श्यामवर्णं चतुर्भुजं बीजपूरकपद्मयुक्तदक्षिणपाणिं नकुलकाक्षसूत्रवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां निर्वाणां देवीं गौरवर्णां पद्मासनां चतुर्भुजां पुस्तकोत्पलयुक्तदक्षिणकरां कमण्डलुकमलयुतवामहस्तां चेति ॥ १६ ॥ ॥ तथा सप्तदशं कुन्थुनाथं कनकवर्णं छागलाञ्छनं कृत्तिकाजातं वृषभराशिं चेति। तत्तीर्थोत्पन्नं गन्धर्वयक्षं श्यामवर्णं हंसवाहनं चतुर्भुजं वरदपाशान्वितदक्षिणभुजं मातुलिङ्गाङ्कुशाधिष्ठितवा-

मभुजं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां बलां देवीं गौरवर्णां मयूरवाहनां चतुर्भुजां बीजपूरकशूलान्वितदक्षिणभुजां भुषुण्ढिपद्मान्वितवामभुजां चेति ॥ १७ ॥ ॥ तथा अष्टादशमं अरनाथं हेमाभं नन्दावर्त[1]लाञ्छनं रेवतीनक्षत्रजातं मीनराशिं चेति । तत्तीर्थोत्पन्नं यक्षेन्द्रयक्षं षण्मुखं त्रिनेत्रं श्यामवर्णं शम्बर[2]वाहनं द्वादशभुजं मातुलिङ्गबाणखड्गमुद्गरपाशाभययुक्तदक्षिणपाणिं नकुलधनुश्चर्मफलकशूलाङ्कुशाक्षसूत्रयुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां धारणीं देवीं कृष्णवर्णां चतुर्भुजां पद्मासनां मातुलिङ्गोत्पलान्वितदक्षिणभुजां पाशाक्षसूत्रान्वितवामकरां चेति ॥ १८ ॥ ॥ तथैकोनविंशतितमं मल्लिनाथं प्रियङ्गुवर्णं कलशलाञ्छनं अश्विनीनक्षत्रजातं मेषराशिं चेति । तत्तीर्थोत्पन्नं कुबेरयक्षं चतुर्मुखमिन्द्रायुधवर्णं गरुडवदनं गजवाहनं अष्टभुजं वरदपाश[3]चापशूलाभययुक्तदक्षिणपाणिं बीजपूरकशक्तिमुद्गराक्षसूत्रयुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां वैरोट्यां देवीं कृष्णवर्णां पद्मासनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां मातुलिङ्गशक्तियुक्तवामहस्तां चेति ॥ १९ ॥ ॥ तथा विंशतितमं मुनिसुव्रतं कृष्णवर्णं कूर्मलाञ्छनं श्रवणजातं मकरराशिं चेति । तत्तीर्थोत्पन्नं वरुणयक्षं चतुर्मुखं त्रिनेत्रं धवलवर्णं वृषभवाहनं जटामुकुटमण्डितं अष्टभुजं मातुलिङ्गगदाबाणशक्तियुतदक्षिणपाणिं नकुलकपद्मधनुःपरशुयुतवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां वरदत्तां देवीं गौरवर्णां भद्रासनारूढां चतुर्भुजां वरदाक्षसूत्रयुतदक्षिणकरां बीजपूरक[4]कुम्भयुतवामहस्तां चेति ॥ २० ॥

१ नन्द्यावर्त इति पाठः । २ शङ्ख इति पाठान्तरम् । ३ वरदपरशु इति पाठः । ४ मातुलिङ्गशूल इति पाठः ।

॥ तथैकविंशतितमं नमिजिनं कनकवर्णं नीलोत्पललाञ्छनं अश्विनीजातं मेषराशिं चेति । तत्तीर्थोत्पन्नं भृकुटियक्षं चतुर्मुखं त्रिनेत्रं हेमवर्णं वृषभवाहनं अष्टभुजं मातुलिङ्गशक्तिमुद्गराभययुक्तदक्षिणपाणिं नकुलपरशुवज्राक्षसूत्रवामपाणिं चेति । नमेर्गन्धारीदेवीं श्वेतां हंसवाहनां चतुर्भुजां वरदखड्गयुक्तदक्षिणभुजद्वयां बीजपूरकुम्भयुतवामपाणिद्वयां चेति ॥ २१ ॥ ॥ तथा द्वाविंशतितमं नेमिनाथं कृष्णवर्णं शङ्खलाञ्छनं चित्राजातं कन्याराशिं चेति । तत्तीर्थोत्पन्नं गोमेधयक्षं त्रिमुखं श्यामवर्णं पुरुषवाहनं षड्भुजं मातुलिङ्गपरशुचक्रान्वितदक्षिणपाणिं नकुलकशूलशक्तियुतवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां कूष्माण्डीं देवीं कनकवर्णां सिंहवाहनां चतुर्भुजां मातुलिङ्गपाशयुक्तदक्षिणकरां पुत्राङ्कुशान्वितवामकरां चेति ॥ २२ ॥ ॥ तथा त्रयोविंशतितमं पार्श्वनाथं प्रियङ्गुवर्णं फणिलाञ्छनं विशाखाजातं तुलाराशिं चेति । तत्तीर्थोत्पन्नं पार्श्वयक्षं गजमुखमुरगफणामण्डितशिरसं श्यामवर्णं कूर्मवाहनं चतुर्भुजं बीजपूरकोरगयुतदक्षिणपाणिं नकुलकाहियुतवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां पद्मावतीं देवीं कनकवर्णां कुर्कुटवाहनां[1] चतुर्भुजां पद्मपाशान्वितदक्षिणकरां फलाङ्कुशाधिष्ठितवामकरां चेति ॥ २३ ॥ ॥ तथा चतुर्विंशतितमं वर्धमानस्वामिनं कनकप्रभं सिंहलाञ्छनं उत्तराफाल्गुन्यां जातं कन्याराशिं चेति । तत्तीर्थोत्पन्नं मातङ्गयक्षं श्यामवर्णं गजवाहनं द्विभुजं दक्षिणे नकुलं वामे बीजपूरकमिति । तत्तीर्थोत्पन्नां सिद्धायिकां हरितवर्णां सिंहवाहनां चतुर्भुजां पुस्तकाभययुक्तदक्षिणकरां

१ कुक्कुट इति पाठान्तरम् ।

श्यामवर्णं पद्मवाहनमुरगपाणिं चेति ॥ ९ ॥ तथा ब्रह्माणं धवलवर्णं हंसवाहनं कमण्डलुपाणिं चेति ॥ १० ॥ इति दिक्पालदशकम् ॥

## ॥ अथ ग्रहाः ॥

तत्रादित्यं हिङ्गुलवर्णमूर्ध्वस्थितं द्विभुजं कमलपाणिं चेति ॥ १ ॥ तथा सोमं श्वेतवर्णं द्विभुजं दक्षिणे अक्षसूत्रं वामे कुण्डिकां चेति ॥ २ ॥ तथाङ्गारकं रक्तवर्णं द्विभुजं दक्षिणेऽक्षसूत्रं वामे कुण्डिकां चेति ॥ ३ ॥ तथा बुधं पीतवर्णं द्विभुजं अक्षसूत्रकुण्डिकापाणिं चेति ॥ ४ ॥ तथा सुरगुरुं पीतवर्णं द्विभुजं अक्षसूत्रकुण्डिकापाणिं चेति ॥ ५ ॥ तथा शुक्रं श्वेतवर्णं द्विभुजं अक्षसूत्रकमण्डलुपाणिं चेति ॥ ६ ॥ तथा शनैश्चरमीषत्कृष्णं द्विभुजं लम्बकूर्चं किञ्चित्पीतं द्विभुजमक्षमालाकमण्डलुयुक्तपाणिं चेति ॥ ७ ॥ तथा राहुमतिकृष्णवर्णं अर्धकायरहितं द्विभुजमर्धमुद्रान्वितपाणिं चेति ॥ ८ ॥ तथा केतुं धूम्रवर्णं द्विभुजमक्षसूत्रकुण्डिकान्वितपाणिं चेति ॥९॥ इति ग्रहनवकम् ॥ तथा ब्रह्मशान्तिं पिङ्गवर्णं दंष्ट्राकरालं जटामुकुटमण्डितं पादुकारूढं भद्रासनस्थितमुपवीतालङ्कृतस्कन्धं चतुर्भुजं अक्षसूत्रदण्डकान्वितदक्षिणपाणिं कुण्डिकाछत्रालङ्कृतवामपाणिं चेति ॥ १ ॥ तथा क्षेत्रपालं क्षेत्रानुरूपनामानं श्यामवर्णं बर्बरकेशमावृत्तपिङ्गनयनं विकृतदंष्ट्रं पादुकाधिरूढं नग्नं कामचारिणं षड्भुजं मुद्गरपाशडमरुकान्वितदक्षिणपाणिं श्वानाङ्कुशगेडिकायुक्तवामपाणिं श्रीमद्भगवतो

दक्षिणपार्श्वे ईशानाश्रितं दक्षिणाशामुखमेव प्रतिष्ठाप्यमिति ॥ २ ॥ इति श्रीनिर्वाणकलिकाभिधानायां प्रतिष्ठापद्धतौ श्रीमज्जिनादीनां वर्णादिविधिः ॥

॥ अथ प्रशस्तिः ॥

श्रीविद्याधरवंशभूषणमणिः प्रख्यातनामा भुवि। श्रीमत्सङ्गमसिंह इत्यधिपतिः श्वेताम्बराणामभूत् ॥
शिष्यस्तस्य बभूव मण्डनगणिर्यो वाचनाचार्य इत्युच्चैः पूज्यपदं गुणैर्गुणवतामग्रेसरः प्राप्तवान् ॥ १ ॥ क्षान्तेः
क्षेत्रं गुणमणिनिधिस्तस्य पादलिप्तसूरिर्जातः शिष्यो निरुपमयशःपूरिताशावकाशः ॥ विन्यस्तेयं निपुणम-
नसा तेन सिद्धान्तमग्र्याण्यालोच्यैषा विधिमविदुषां पद्धतिर्बोधिहेतोः ॥ २ ॥ शुभमस्तु ॥ सं० १८५२ मिति
कार्तिकशुक्लपूर्णिमायां लिखितमिदम् ॥



मातुलिङ्गबाणान्वितवामहस्तां चेति ॥ २४ ॥ तथा श्रुतदेवतां शुक्लवर्णां हंसवाहनां चतुर्भुजां वरदकमलान्वित-दक्षिणकरां पुस्तकाक्षमालान्वितवामकरां चेति । तथा शान्तिदेवतां धवलवर्णां कमलासनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां कुण्डिकाकमण्डल्वन्वितवामकरां चेति ॥ इति अर्हदादीनां वर्णादिक्रमकथनम् ॥

## ॥ अथ विद्यादेवीनां षोडशकम् ॥

तत्राद्यां रोहिणीं धवलवर्णां सुरभिवाहनां चतुर्भुजामक्षसूत्रबाणान्वितदक्षिणपाणिं शङ्खधनुर्युक्तवामपाणिं चेति ॥ १ ॥ तथा प्रज्ञप्तिं श्वेतवर्णां मयूरवाहनां चतुर्भुजां वरदशक्तियुक्तदक्षिणकरां मातुलिङ्गशक्तियुक्तवामहस्तां चेति ॥ २ ॥ तथा वज्रशृङ्खलां शङ्खावदातां पद्मवाहनां चतुर्भुजां वरदशृङ्खलान्वितदक्षिणकरां पद्मशृङ्खलाधिष्ठितवामकरां चेति ॥ ३ ॥ तथा वज्राङ्कुशां कनकवर्णां गजवाहनां चतुर्भुजां वरदवज्रयुतदक्षिणकरां मातुलिङ्गाङ्कुशयुक्तवामहस्तां चेति ॥ ४ ॥ तथा अप्रतिचक्रां तडिद्वर्णां गरुडवाहनां चतुर्भुजां चक्रचतुष्टयभूषितकरां चेति ॥ ५ ॥ तथा पुरुषदत्तां कनकावदातां महिषीवाहनां चतुर्भुजां वरदासियुक्तदक्षिणकरां मातुलिङ्गखेटकयुतवामहस्तां चेति ॥ ६ ॥ तथा कालीं देवीं कृष्णवर्णां पद्मासनां चतुर्भुजां अक्षसूत्रगदालङ्कृतदक्षिणकरां वज्राभययुतवामहस्तां चेति ॥ ७ ॥ तथा महाकालीं देवीं तमालवर्णां पुरुषवाहनां चतुर्भुजां अक्षसूत्रवज्रान्वितदक्षिणकरामभयघण्टालङ्कृतवामभुजां चेति ॥८॥ तथा गौरीं देवीं कनकगौरीं गोधावाहनां चतुर्भुजां वरदमुसलयुतदक्षिणकरामक्षमालाकुवलयालङ्कृतवामहस्तां चेति ॥ ९ ॥ तथा गान्धारीं देवीं नीलवर्णां कम-

चेति ॥ १० ॥ सर्वास्त्रमहाज्वालां लासनां चतुर्भुजां वरदमुसलयुतदक्षिणकरां अभयकुलिशयुतवामहस्तां चेति ॥ ११ ॥ तथा मानवीं श्यामवर्णां कमलासनां चतुर्भुजां धवलवर्णां वराहवाहनां असंख्यप्रहरणयुतहस्तां चेति ॥ १२ ॥ तथा वैरोट्यां श्यामवर्णां अजवरदपाशालङ्कृतदक्षिणकरां अक्षसूत्रविटपालङ्कृतवामहस्तां चेति ॥ १३ ॥ तथा अच्छुप्तां तडिद्वर्णां गरवाहनां चतुर्भुजां खड्गोरगालङ्कृतदक्षिणकरां खेटकाहियुतवामकरां चेति ॥ १४ ॥ तथा मानसीं धवलवर्णां तुरगवाहनां चतुर्भुजां खड्गबाणयुतदक्षिणकरां खेटकाहियुतवामकरां चेति ॥ १५ ॥ तथा महामानसीं हंसवाहनां चतुर्भुजां वरदवज्रालङ्कृतदक्षिणकरां अक्षवलयाशनियुक्तवामकरां चेति ॥ १६ ॥ इति धवलवर्णां सिंहवाहनां चतुर्भुजां वरदासियुक्तदक्षिणकरां कुण्डिकाफलकयुतवामहस्तां चेति ॥ १६ ॥ इति विद्यादेवीषोडशकम् ॥

॥ अथ लोकपालाः ॥

तत्र शक्रं पीतवर्णं ऐरावतवाहनं वज्रपाणिं चेति ॥ १ ॥ तथा अग्निं अग्निवर्णं मेषवाहनं सप्तशिखं शक्तिपाणिं चेति ॥ २ ॥ तथा यमराजं कृष्णवर्णं महिषवाहनं दण्डपाणिं चेति ॥ ३ ॥ तथा नैर्ऋतिं हरितवर्णं शववाहनं खड्गपाणिं चेति ॥ ४ ॥ तथा वरुणं धवलवर्णं मकरवाहनं पाशपाणिं चेति ॥ ५ ॥ तथा वायुं सितवर्णं मृगवाहनं वज्रा( ध्वजा )लङ्कृतपाणिं चेति ॥ ६ ॥ तथा कुबेरमनेकवर्णं निधिनवकाधिरूढं निचुलकहस्तं तुन्दिलं गदापाणिं चेति ॥ ७ ॥ तथेशानं धवलवर्णं वृषभवाहनं त्रिनेत्रं शूलपाणिं चेति ॥ ८ ॥ तथा नागं

श्यामवर्णं पद्मवाहनमुरगपाणिं चेति ॥ ९ ॥ तथा ब्रह्माणं धवलवर्णं हंसवाहनं कमण्डलुपाणिं चेति ॥ १० ॥ इति दिक्पालदशकम् ॥



## ॥ अथ ग्रहाः ॥

तत्रादित्यं हिङ्गुलवर्णमूर्ध्वस्थितं द्विभुजं कमलपाणिं चेति ॥ १ ॥ तथा सोमं श्वेतवर्णं द्विभुजं दक्षिणे अक्षसूत्रं वामे कुण्डिकां चेति ॥ २ ॥ तथाङ्गारकं रक्तवर्णं द्विभुजं दक्षिणेऽक्षसूत्रं वामे कुण्डिकां चेति ॥ ३ ॥ तथा बुधं पीतवर्णं द्विभुजं अक्षसूत्रकुण्डिकापाणिं चेति ॥ ४ ॥ तथा सुरगुरुं पीतवर्णं द्विभुजं अक्षसूत्रकुण्डिकापाणिं चेति ॥ ५ ॥ तथा शुक्रं श्वेतवर्णं द्विभुजं अक्षसूत्रकमण्डलुपाणिं चेति ॥ ६ ॥ तथा शनैश्चरमीषत्कृष्णं द्विभुजं लम्बकूर्चं किञ्चित्पीतं द्विभुजमक्षमालाकमण्डलुयुक्तपाणिं चेति ॥ ७ ॥ तथा राहुमतिकृष्णवर्णं अर्धकायरहितं द्विभुजमर्घमुद्रान्वितपाणिं चेति ॥ ८ ॥ तथा केतुं धूम्रवर्णं द्विभुजमक्षसूत्रकुण्डिकान्वितपाणिं चेति ॥९॥ इति ग्रहनवकम् ॥ तथा ब्रह्मशान्तिं पिङ्गवर्णं दंष्ट्राकरालं जटामुकुटमण्डितं पादुकारूढं भद्रासनस्थितमुपवीतालङ्कृतस्कन्धं चतुर्भुजं अक्षसूत्रदण्डकान्वितदक्षिणपाणिं कुण्डिकाछत्रालङ्कृतवामपाणिं चेति ॥ १ ॥ तथा क्षेत्रपालं क्षेत्रानुरूपनामानं श्यामवर्णं बर्बरकेशमावृत्तपिङ्गनयनं विकृतदंष्ट्रं पादुकाधिरूढं नग्नं कामचारिणं षड्भुजं मुद्गरपाशडमरुकान्वितदक्षिणपाणिं श्वानाङ्कुशगेडिकायुक्तवामपाणिं श्रीमद्भगवतो

॥ ३८ ॥

दक्षिणपार्श्वे ईशानाश्रितं दक्षिणाशामुखमेव प्रतिष्ठाप्यमिति ॥ २ ॥ इति श्रीनिर्वाणकलिकाभिधानायां प्रतिष्ठापद्धतौ श्रीमज्जिनादीनां वर्णादिविधिः ॥

॥ अथ प्रशस्तिः ॥

श्रीविद्याधरवंशभूषणमणिः प्रख्यातनामा भुवि । श्रीमत्सङ्गमसिंह इत्यधिपतिः श्वेताम्बराणामभूत् ॥ क्षान्तेः प्रासवान् ॥ १ ॥ शिष्यस्तस्य बभूव मण्डनगणिर्योवाचनाचार्य इत्युच्चैः पूज्यपदं गुणैर्गुणवतामग्रेसरः ॥ विन्यस्तेयं निपुणमक्षेत्रं गुणमणिनिधिस्तस्य पादलिप्तसूरिर्जातः शिष्यो निरुपमयशःपूरिताशावकाशः ॥ नसा तेन सिद्धान्तमन्त्राण्यालोच्यैषा विधिमविदुषां पद्धतिर्योधिहेतोः ॥ २ ॥ शुभमस्तु ॥ सं० १८५२ मिति कार्तिकशुक्लपूर्णिमायां लिखितमिदम् ॥



# निर्वाणकलिकाशुद्धिपत्रम् ।

| पत्रं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २–१ | ६ | क्ष्वीं क्ष्वीं | ङ्क्ष्वीं क्ष्वीं |
| २–१ | १२ | ऊध्वदन्तपङ्क्तौ | ऊर्ध्वदन्तपङ्क्तौ |
| ४–१ | ९ | ॐ शनैश्चराय | ॐ शनैश्चराय |
| ४–२ | ६ | ०रादावमुखेनापि | ०रादावन्यमुखेनापि |
| ६–१ | ९ | तत्समं तत्र | तत्समसूत्रं |
| ६–२ | १ | अङ्गुलानि | ञ्यङ्गुलानि |
| ६–२ | ६ | अघराग्रं | मंथराग्रं |
| ६–२ | ७ | वीथीषु त्रीन् | वीथीसूत्रीन् |
| ७–२ | १ | नाश्नीयात् ७ मद्यमांसादिकं न भक्षयेत् ८। गुरोराज्ञां न लङ्घयेत् ८। | नाश्नीयात् ७ मद्यमांसादिकं न भक्षयेत् ७। गुरोराज्ञां न लङ्घयेत् ८। |
| ८–२ | १३ | ०मिमयानुय– | ०मिमङ्क्यानु– |
| १०–२ | ७ | कचटतपयसह्यजै० | ०कचटतपसह्यजै० |
| ११–१ | ३ | सज्य | सत्य |
| ११–१ | १० | विलिपिच्छा | पिलिपिच्छा |
| ११–१ | १२ | पूर्ववादसरक्षादिकं | पूर्ववत्संरक्षादिकं |
| १५–१ | १४ | ७ अः पाठान्तरं | ७ क्षः पाठान्तरम् |

| पत्रं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५—२ | ७ | आठुजलं | आ ४ जलं |
| १६—२ | १२ | इच्छायाः ॥ १ ॥ | इच्छया ॥ १ ॥ |
| १७—१ | ४ | पूर्वोत्तराई (सु) रोहिणी | पूर्वोत्तराइ (सु) रोहिणी |
| १७—१ | ९ | नामरूपापि | नामरूपाणि |
| १७—१ | १४ | कुवेरश्चा | कुबेरश्च |
| १८—२ | ११ | ०गन्धाये | ०गन्धार्यै |
| २१—२ | १२ | ०वस्तुता | वस्तृता |
| २२—१ | ४ | इमार्सि | इमार्सि |
| २२—१ | ७ | संवसहिता | संघसहित |
| २३—१ | ८ | रत्नगर्भा | रत्नगर्भे |
| २४—१ | ६ | परिवट्टमाण | परिवड्डमाण |
| २४—१ | ७ | नन्दंन्ति | नन्दन्ति |
| २५—२ | १ | वटइ | वड्डइ |
| ३२—१ | २ | संलभमधु | संलभसुष्ठु |
| ३२—१ | ८ | शेषाङ्गुला | शेषाङ्गुलीः |
| ३२—२ | ८ | ०तर्जन्योस्तलान्मूलाक्रमेण | ०तर्जन्यो मूलात्क्रमेण |
| ३६—१ | २ | पाणि चेति | पाणिं चेति |

॥ अर्हम् ॥

मुनि-श्रीमोहनलालजी-जैन-ग्रन्थमाला (५)

सुप्रसिद्धविद्याधरवंशभूषणमणि-श्रीमत्पादलिप्ताचार्यकृता

# निर्वाणकलिका ।

संशोधकः-मोहनलाल भगवानदास झवेरी बी. ए. ( ऑनर्स ) एलएल्. बी., सोलिसिटर,

जैनशिल्पज्योतिषविद्यामहोदधि-पूज्यपाद-जैनाचार्य-श्रीमज्जयसूरीणांसदुपदेशेन-शहापुर-उपधानतपोज्ञानद्रव्य-

साहाय्येन इन्दोरयास्तव्य-शेठ नथमलजी कनैयालाल रांका इत्यनेन,

मोहमय्यां निर्णयसागरमुद्रणयन्त्रे कोलभाटवीथ्यां २६-२८ तमे गृहे रामचन्द्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशिता ।

[ प्रथमसंस्करणे वीरसंवत् २४५२, विक्रमसंवत् १९८२, इसवीसन १९२६. प्रतयः १००० ]

पण्यं सार्धरूप्यकः ।

## छपायेला ग्रन्थो.





श्रीविघ्नौघसंछेदिने नमः।

# भूमिका.



के के न कालमाहात्म्यविदो विद्वांस इति विदन्ति यत्कालोऽयमुपचयापचययोर्भावानां विधायकतया कथ्यते सुषमसुषमादिरूपः दुःषमादिरूपो वा। तत्रायं प्रतिविचारो यत् कालस्य तद्विशेषस्य वा वस्तुजातसाधारणकारणत्वेन संमतस्य संपर्कादाविर्भवति भावानामुपचयोऽपचयो वोत भावानामुपचयापचयाभ्यामारोपितं भवति काले सुषमसुषमादिवैशिष्ट्यम्। अर्थात् कालः स्वभावादेव तथाविधतयाविधधर्मपराधीनो बलादिव भावानामुपचयापचययोः प्रयोजको भवत्युत भावा एवावश्यंभाविताद्दशताद्दशोपचयापचयतत्कारणभूतधर्मविशेषपराधीनाः कालस्य तथाविधतयाविधाभिलापे प्रयोजका भवन्तीति (एवं क्षेत्रस्यापि प्रयोजकतोह्या) द्रव्यक्षेत्रकालभावादिपदार्थान्तरापेक्षायत्त्वेन स्याद्वादिभिर्विद्वद्भिस्समर्थितोऽपि ताद्दशस्ताद्दशो भावप्रकर्षापकर्षान्यतररूपः पर्यायापरपर्यायो भावविकारो नोपकरोति कालतारतम्यस्येत्थंभावेन निरूपणे। एवं प्राप्ते विसंवादे केचनोच्छृङ्खला नवीनाः—कालस्तु परममहत्त्वादेकत्वादाकाशादिवन्निर्लेपस्तत्र तत्र प्रतीयमानो धर्मविशेषः कल्यादिरूपो दुःषमदुःषमादिरूपो वा व्यवहारसाधारणो भाक्तः। भावानामुपचयबाहुल्ये भवति व्यवहारोऽनुकूलोऽयं काल इति। तथैव भावानामपचयबाहुल्ये प्रतिकूलोऽयं काल इति भवति व्यवहारः (एवं दिगादिगतोऽप्यनुकूलत्वाननुकूलत्वव्यवहारो भाक्तः)। अस्मिन्नेव च समये संगता भवन्ति लोकोक्तयो राजा कालस्य कारणमित्यादयः। निरुपाधिस्तु कालः कल्पायुपापि न शक्यो

निरूपयितुमुपाधीनामसद्भावे निरूपणासंभवान्निरूपकनिरूप्यनिरूपणादीनामप्युपाध्यनन्यत्वात् । संप्रदायपरवशपरामर्शपक्षपातिनस्तु नैकान्ततो मन्यन्ते कालकुहरैकशरणांस्तांस्तान् धर्मान् भाक्तान् । आयुषोऽल्पत्वकृते न कोपि यतते तथापि दृश्यते तस्य ह्रासस्समं दौर्बल्येन । न कस्यापि संमताऽनुपस्थितिस्सात्त्विकविदुषां परन्त्वायाति सा संमुखे वार्यमाणापि प्रायेण "कालं हि पौरुषं चाहुः पुरुषस्य महात्मनः । के न कालेन भक्षिताः । अन्ये कृतयुगे धर्माः ।" इत्यादिलोकोक्तयोऽप्यस्मिन्नेव कल्पे समुचिततया संगता भवन्ति । ऋजु—ऋजुवक्र—वक्राणां प्रभूततापि तत्तत्कालपरवशैव सम्मता सहृदयानाम् । अस्मिन्नेव कल्पे कालस्य समुचिता संभवत्युपयोगितापि । प्रथम-कल्पपक्षपातिभिरपि वस्तुजातसाधारणकारणत्वेन सम्मतस्य कालस्येति वदद्भिः परोक्षरूपतस्स्वीकृतैव वस्तुजातसाधारणकारणरूपा परमाति-महत्युपयोगिता कालस्य । उपाधीनां सद्भावे सोपाधिकत्वेऽपि तस्य तस्य भावस्य तदीयनिरुपाधिकस्वरूपप्रत्यये स्वतन्त्रधर्मसादरस्वीकारेऽपि न कोऽपि बाधो न वा प्रत्यूहभयम् । सोपाधिके काकवति गृहेऽपि भवति निरुपाधिकं गृहमिति गृहमात्रविषयको व्यवहारः । स्वीक्रियन्ते चावारकत्वादयो धर्माश्च । सति तात्पर्ये निरूपकादीनामुपाधित्वेऽपि न तेन तेन विहन्यते कालस्य स्वातन्त्र्यम् । अतएव स्थूलशरीरावच्छेदेनै-वात्मनो व्यवहारप्रयोजकत्वे तदवच्छेदेनैव तस्य तद्विषयकबोधविषयत्वे वा समाद्रियमाणेऽपि नापलप्यते तस्यानन्तज्ञानदर्शनचारित्र्य-सामर्थ्यं नवोपेक्ष्यन्ते तस्य तास्ता ऊर्ध्वगत्यादयश्शक्तयोऽन्तरा स्थूलशरीरम् । नच चार्वाकमन्तरा कस्यापि दार्शनिकस्य दृश्यते विवादः स्थूलशरीरानवच्छेदेनाप्यात्मनोऽस्तित्वस्वीकारे ।

समष्टिजीवनक्षणसमुदायस्य तारतम्यप्रयोजकतायां कालसामान्यनिष्ठतया सिद्धायामपि कालस्य यौगपद्येन कस्यचिद्युवत्वप्रयोजकता कस्यचिद्वृद्धत्वप्रयोजकतापि न भवति विरुद्धा निजनिजादृष्टबललब्धतत्तत्फलानुकूलतत्तत्परिमितक्षणराशेरपि व्यक्तिगतयुवत्वादिकारणत्वात् ।

दशाहं वा क्षीराम्नभोजिनं पञ्चनमस्कारजपनिरतं शिष्यं विधाय आसन्नलग्नदिने संध्यायां व्याघाताद्येकतमं कालं संशोध्य प्रातरुत्थाय शुद्धकालं प्रवेद्य स्वाध्यायं प्रस्थाप्य ततश्चैशान्यां मण्डपवेदिकायां चतुर्हस्तं रजोभिश्च पञ्चवर्णरूपशोभितं मध्यलिखितद्वात्रिंशदङ्गुलं शुक्लपद्मं द्वात्रिंशदङ्गुलायामं षोडशाङ्गुलं विस्तृतावाहनीयद्वारा-भिमुखसर्वरजोमुक्तपादपीठसहितं बाह्यचित्रवल्लीद्वारमक्षकोणस्थकन्दुकाद्युपशोभितं स्वस्वदिक्स्थावाहनीय-द्वारपूर्वदिग्वाहितद्वारं वा मण्डलमालिखेत्। तत्र वीथ्यन्तर्गतान् पूर्वादिक्रमेण शुक्लरजसाऽष्टौ शङ्खान् आ-नन्द–सुनन्द–नन्दि–नन्दिवर्धन–श्रीमुख–विजय–तार–सुतार–संज्ञान् सुभद्र–विजयभद्र–सुदन्त–पुष्पदन्त–जय–विजय–कुम्भ–पूर्णकुम्भसंज्ञांश्च तथाविधान् कुम्भानालिखेत्। मण्डलस्योपरि धवलं विचित्रं वा किङ्कि-णीघण्टायुक्तं मुक्ताजालगवाक्षकोपेतं मणिदामोपशोभितं सच्चामरपट्टवस्त्रोपेतं लम्बमानप्रतिसरकन्दुकाद्यलं-कृतं वितानकं विदधीत। मण्डपस्याभ्यन्तरं क्वचित्पद्मिनीपत्रसंछन्नमन्तरालेषु बहिश्च गौरसर्षपलाजाखण्डत-ण्डुलयवैर्दूर्वाकाण्डरजोभिश्च विचित्रं कुर्यात्। तोरणं चास्य ध्वजाङ्कुशचीरैर्[3]मण्डितं चन्दनमालायुक्तं पूर्वस्यां न्यग्रोधं[4], दक्षिणस्यामौदुम्बरं, पश्चिमायामाश्वत्थं, उत्तरस्यां प्लाक्षं, विनिवेश्य विदिक्षु प्रशस्तद्रुमजातानि च निवेशयेत्। शङ्खान् कलशांश्च मूर्तिमतो गोरोचनारचितस्वस्तिकाष्टकार्चितकण्ठान् सर्वरत्नैः सर्वबीजैः सर्वौषधिगन्धैरद्भिश्च पूरितान् वस्त्रस्रग्दामकण्ठान् चन्दनोपलेपितान् शतकृत्वोऽ[5]भिमन्त्रितान् पीठिकाया

१ भिद्र इति ग. पाठः। २ जव इति ग. पाठः। ३ वारमंडितं इति ग. पाठः। ४ नैयग्रोधं इति पार्श्वपाठः। ५ कृत्वाभि इति क. ग. पाठः।

वहिर्दिक्षु विदिक्षु च स्थापयेत् । तत्रायत आनन्दः । नात्यायतः सुनन्दः । महाकुक्षिर्नन्दी । सुनाभिर्नन्दिवर्धनः । ह्रस्वनाभिः श्रीमुखः । नाभिमण्डली विजयः । सुनिर्घोषस्तारः । उच्चस्वनः सुतारश्चेति । कलशाश्च–मन्थरसुभद्रः । किञ्चिदुन्नतो विभद्रः । पृथुलोष्ठः सुदन्तः । ह्रस्वोष्ठः पुष्पदन्तः । मन्थरग्रीवो जयः । शोभनग्रीवो विजयः इति मण्डलस्योत्तरे दुःस्वरं सदशाहतसितवस्त्रच्छन्नं भद्रासनं विन्यस्य तस्मिन् शिष्यं शङ्खतूर्यवीणावेणुस्वस्तिपुण्याहमङ्गलध्वनिभिः कृतमङ्गलं पूर्वद्वाराभिमुखं समुपवेश्य जातबीजशरावैश्चित्रमुखैर्गुणैरञ्जलिकारकैर्नागैरभिन्नपुटकोकाभिर्निमृश्य वल्मीकाग्र–पर्वताग्र–नदीतीर–महानदीसंगम–कुशबिल्वमूल–चतुष्पथ–दन्तिदन्त–गोशृङ्ग–एकवृक्षगृहीताभिर्मृद्भिः प्रथमं, तदनु पञ्चामृतेन, ततो वासचन्दनपञ्चपल्लवकषायैः सर्वगन्धैश्च संस्नाप्य प्रदक्षिणोपनीतैः पूर्वविन्यस्तकुम्भैराचार्यमन्त्रमनुस्मरन्नभिषिञ्चेत् । ततः स्नानवस्त्रं परित्यज्य शुक्ले वाससी परिधाय्याखण्डतण्डुलैः स्नापयेत् । तैश्च प्रवृद्धैः प्रवृद्धां समैः समां हीनैश्च हीनामुन्नातिं जानीयात् । तदनु मूलमण्डपवेदिकायां पञ्चवर्णेन रजसा रत्नकाञ्चनरजतमयप्राकारत्रयोपेतं गोपुर–चतुष्कालङ्कृतं तोरण–ध्वज–पुष्करिणीपुष्प–प्राकारोपशोभितं समवसरणमालिख्य मध्ये च पद्मरागादिभिर्निर्मिते मृगाधिपासने चतुर्मुखमष्टप्रातिहार्योपेतं भगवन्तं संस्थाप्य वेदीयवारकवितानकपुष्पगृहादिकं पूर्ववत्कृत्वा शिष्यं तत्रानीय सकलिकां विधाय मन्त्रैरालभ्य मुक्तपुष्पैः सम्पूज्यालङ्कारैरलङ्कृत्याक्षतानाचार्यमन्त्रेणाभिमयानुय-

१ स्थान्तरे इति ग. पाठः । २ सुनृदुःस्वरं इति क. ख. पाठः ।

योगगणानुज्ञार्थं चैत्यवन्दनं श्रुतादिदेवतानां च कायोत्सर्गाणि कृत्वा पञ्चनमस्कारपूर्वकं नन्दिसूत्रमावर्तयेत्। शिष्योऽपि मुखवस्त्रिकया स्थगितमुखकमलः शृणुयात् । अनन्तरमाचार्यो भगवत्पादयुगे वासान् प्रक्षिप्य गोमयशालिपुष्पादिचूर्णमयान् सङ्घभट्टारकस्य वासान् दत्वा एवं ब्रूयात्–'अहमस्य साधोरनुयोगमुक्तलक्षणमनुजानामि क्षमाश्रमणानां हस्तेन द्रव्यगुणपर्यायैर्व्याख्याङ्गरूपैरेपोऽनुज्ञातः' इत्यत्रान्तरे वन्दित्वा शिष्यः 'संदिशत यूयं किं भणामि' इत्यादिवर्णजातं यथैव सामायिकैः तथात्रैव द्रष्टव्यमिति। तदनु वासःक्षेपपूर्वकं प्रदक्षिणात्रयं कारयित्वाऽनुयोगानुज्ञां[1] दद्यात् । तदर्थं कायोत्सर्गं कृत्वा निषद्यायामुपविश्य आत्मनो दक्षिणभागे शिष्यमुपवेश्य लग्नवेलायां कुम्भकयोगेनाचार्यपरम्परागतं पुस्तकादिषु लिखितमाचार्यमन्त्रं निवेदयेत्। ततो गन्धपुष्पाक्षतान्वितं मुष्टित्रयमक्षाणां दत्त्वा तदनु छत्र–चामर–हस्त्यश्व–शिबिका–राजाज्ञानि योगपट्टक–खटिका–पुस्तका–ऽक्षसूत्र–पादुकादिकं च दद्यात् । स्वशाखानुगतं च नाम दत्त्वा स्वगच्छेन सह द्वादशावर्तवन्दनकं दत्त्वा गणं समर्प्याज्ञां श्रावयेत्–'अद्यप्रभृति दीक्षाप्रतिष्ठाव्याख्यादिकं ज्ञात्वा परीक्ष्य च त्वया विधेयम्' इति। ततश्च 'व्याख्यानं कुरु' इत्यनुज्ञातो नन्द्यादिव्याख्यानं यथाशक्त्या करोत्यभिनवाचार्यः। तदनु मूलाचार्यो निषद्यायां समुपविश्य–"षट्त्रिंशदुज्ज्वलमहागुणरत्नधुर्यैरेतत्पदं प्रथितगोतममुख्यपुम्भिः। आसेवितं सकलदुःखविमोक्षणाय निर्वाहणीयमशठं भवतापि नित्यम् ॥ १ ॥ आरोप्यते

१ नुयोगाज्ञां इति ग. पाठः।

पदमिदं बहुपुण्यभाजो निर्वाहयन्ति च निरन्तरपुण्यभाजः । आराध्य शुद्धविधिना धनमेकमेकं संप्राप्नुवन्ति शनकैः शिवधामसौख्यम् ॥ २ ॥ नास्मात्पदाज्जगति साम्प्रतमस्ति किंचिदन्यत्पदं शुभतरं परमं नराणाम् । येनात्र पञ्चपरमेष्ठिपदेषु मध्येऽतिक्रान्तमाद्ययुगलं खलु कालदोषात् ॥ ३ ॥" इत्यादिवाक्यैराचार्योऽनुशास्तिं दद्यात् । तदनु भगवते निवेद्य 'आचार्योऽयं त्वदनुज्ञातो मया कृतो भवत्प्रसादादधिकारं निर्विघ्नेन करोतु' इति विज्ञापयेत् । पुनर्भगवते प्रणिपातं कारयित्वा भगवन्तं क्षमापयेत् । स च लब्धाधिकारो गुरुपारम्पर्यागतमधिकारं कुर्यादिति ॥ एवमनेन विधिना राज्य[1]कामस्य भ्रष्टराज्यस्य पुत्रकामसौभाग्यकामयोश्चाभिषेकं कुर्यादिति ॥ अत्र शङ्खादीनां मन्त्राः । ॐ आं इं उं आनन्दात्मने नमः । एवं शेषा अपि पूर्वोत्तरान्ता विज्ञेयाः । ॐ आं ईं ऊं सर्वरत्नेभ्यो विश्वात्मकेभ्यो नमः । रक्षामन्त्रः । सर्वबीजेभ्यः इन्द्रात्मकेभ्यो नमः । बीजमन्त्रः । सर्वौषधिभ्यः सोमात्मिकाभ्यो[2] नमः । औषधिमन्त्रः । सर्वगन्धेभ्यः पार्थिवात्मकेभ्यो नमः । गन्धमन्त्रः । सर्वमृद्भ्यः पृथिव्यात्मिकाभ्यो[3] नमः । मृत्तिकामन्त्रः । न्यग्रोधात्मने सुराधिपतोरणाय नमः । १ । पलाशात्मने तेजोधिपतोरणाय नमः । २ । उदुम्बरात्मने धर्मराजतोरणाय नमः । ३ । सिद्धकात्मने रक्षोधिपतोरणाय नमः । ४ । अश्वत्थात्मने सलिलाधिपतोरणाय नमः । ५ । मधुकात्मने पवनाधिपतोरणाय नमः । ६ । प्लक्षात्मने यक्षाधिपतोरणाय नमः । ७ । बिल्वात्मने विद्याधिपतोरणाय नमः । ८ । तोरणमन्त्रः ॥ इति आचार्याभिषेकः ॥



१ कामभ्रष्ट इति ग. पाठः । २ सोमात्मकेभ्यः इति क. ख. ग. पाठः । ३ पृथिव्यात्मकेभ्य इति क. ख. ग. पाठः ।

## ॥ अथ भूपरीक्षा ॥

अथ प्रासादं चिकीर्षुः प्रागेव सुपरीक्षितां भुवं गृह्णीयात्। तत्र भूमिः शुक्ला आज्यगन्धा मधुरा ब्राह्मणस्य। रक्ता रक्तान्तगन्धा कषाया क्षत्रियस्य। पीता तिक्तान्तगन्धा वैश्यस्य। विगन्धा कटुका कृष्णा मद्यगन्धा शूद्रस्य। शेषा चतूरूपाऽपि खातवारिदीपगुणादिना परीक्षणीया। तत्र हस्तमात्रं खातं तत्रत्यमृदा यस्याः पूर्यते सा मध्यमा। या उद्धरति मृत्तिका सा श्रेष्ठा। यत्राऽपरिपूर्णा मृत्तिका साऽधमा। उदकेन च खातमापूरितं पदशतगमनागमनपर्यन्तं यत्र सम्पूर्णं दृश्यते सा ज्यायसी। अङ्गुलोनं मध्यमा। बहुभिरङ्गुलैरूनं निकृष्टेति। आमकुम्भस्य वा उपरि घृतपूर्णामशरावे[1] चतुर्दिक्षु सितरक्तपीतकृष्णवर्तिचतुष्टयं प्रज्वालयेत्। (प्रज्वालितं हृदयादिमन्त्रसम्पूजितमालेहान्तं)[2] यदि पश्येत्तदा सर्ववर्णानां भूः प्रशस्तेति जानीयात्। अथ निर्वाणा यावन्त्यस्तावतां सा न प्रशस्तेति। एवं परीक्ष्य तस्यां यथोक्तं मण्डपं कुण्डसहितं कारयित्वा द्वारपालपूजादिमन्त्रतर्पणान्तं कर्म कृत्वा मूलमन्त्रेण सहस्रं हुत्वा कुम्भपञ्चकं सप्तधान्यानामुपरि स्थितं पुण्योदकपूर्णं प्रशस्तौषधीरत्नगर्भं चूताश्वत्थादिपल्लववीजपूरादि[3]फलोपशोभितं वस्त्रयुगावृतं स्रक्सूत्रकण्ठं शासनेन साङ्गेन भगवता समधिष्ठितं सम्पूज्य लग्नकाले प्रासादस्य मध्यस्थाने कुम्भजलं प्रक्षिप्य पूर्वदक्षिणपश्चिमो-

---

१ घृतपूर्णशरावे इति ग. पाठः। २ धनुश्चिह्नान्तर्वर्ती भागः क. ख. योर्नास्ति। ३ वीजपूगादि इति ग. पाठः।

त्तरसीमासु च ततो मध्यस्थखातात्तस्मात् मृदमादाय नैर्ऋत्यां दिशि प्रक्षिपेत् । कुम्भावशिष्टजलेन खातं चाप्लाव्य कुद्दालादिकं संस्थाप्य पूजयेत् । ततः परं पूर्णकुम्भं वस्त्रयुगच्छन्नास्यमिन्द्रस्य[1] स्कन्धे निधाय गीतवाद्यादिब्रह्मघोषेण बहुजनसाक्षिकं यावदभिप्रेतं पुरः पूर्वसीमान्तं[2] नयेत् । तत्र च मुहूर्तमात्रं स्थित्वा प्रदक्षिणमार्गे आग्नेयादिईशानदिगन्तं भ्रामयेत् । ततः प्रासादभूमौ शङ्कष्टकं प्रासादसीमाविनिश्चयार्थं चतुर्षु कोणेषु विन्यस्य सूत्रेण संयोज्य सुवर्ण–रजत–मुक्ता–दध्यक्षतादिभिरेषां प्रदक्षिणां कुर्यादिति भूमिपरिग्रहं विधाय । मनोवृत्त्या वास्तुं संकल्प्याऽशल्यं निरूपयेत् । तत्र यजमानाङ्गकण्डूयनादिना क्षेत्रे शृगालादिप्रवेशेन वा लग्नेन वा ध्वजाद्यायैर्वा कचटतपयसहयजैर्नवभिर्वर्णैः प्रश्नैर्वा शल्यं जानीयात् । तत्र शिरःकण्डूयने शिरःशल्यम् । तत्प्रमाणेन अन्यदङ्गकण्डूयनादिना विकृतिं करोति तदङ्गेन तत्प्रमाणेन शल्यम् । द्विरूपे द्विरूपं शल्यम् । सर्वाङ्गिके विकारे सर्वत्र शल्यम् । ज्ञात्वा खनित्वा शल्यमुद्धृत्य हस्तापूरपाषाणैरष्टाङ्गुलोद्धृतमृदं तैर्जलाप्लावितैर्मुद्गरकुट्टितैः पादत्रयान्तमापूर्य समप्लवां सुघटितां सुश्लक्ष्णां भुवं विधाय छायाशङ्कादिना प्राचीं दिशं संसाध्य शिलासु लाञ्छनानि कृत्वा सम्पूजयेत् । इति भूपरीक्षा ( भूपरिग्रहः ) समाप्ता ॥

---

१ सिन्द्रस्कन्धे इति ग. पाठः । २ सीमन्तं इति क. पाठः ।

## ॥ अथ शिलान्यासविधिः ॥

तत्र प्रासादक्षेत्रमष्टधा विभज्य चतुष्षष्टिकोष्टकान् कृत्वा चैशान-नैर्ऋत्य-मूर्ध्ववंशं आग्नेयाञ्च वायव्यान्तं तिर्यग्वंशद्वयं दत्त्वा द्विपदं षट्पदं च रक्षाष्टकं विन्यस्य मर्माणि ज्ञात्वा ईशानकोणार्धे ईशं दत्त्वा 'पर्जन्य-जयमाहेन्द्ररविसत्यभृशान्पदिकान् सम्पूज्य अग्निकोणकोष्टके व्योमपावकौ विन्यस्य पूषावितथग्रहक्षतयम-गन्धर्वभृङ्गान् पदिकान् दत्त्वा नैर्ऋत्यकोणकोष्टके मृगपितरौ विन्यस्य दौवारिकसुग्रीवपुष्पदन्तवरुणअसुरशो-षान् पदिकान् सम्पूज्य तदनु वायव्यकोणकोष्टके रोगवायू विन्यस्य नागमुख्यभल्लाटसोमदितिअदित्यन्तान् पदिकान् सम्पूज्य ईशानकोणे अदितिं संपूजयेत् ॥ मध्ये पदचतुष्टये ब्रह्माणं तस्यैशान्यां पदिकौ आपवत्सौ प्रान्यां षट्पदं मरीचिं आग्नेय्यां सवितासावित्री पदिकौ दक्षिणस्यां षट्पदं विवस्वन्तं नैर्ऋत्यामिन्द्रजयौ पदिकौ वारुण्यां षट्पदं मित्रम् वायव्यां रुद्ररुद्रदासौ पदिकौ उत्तरस्यां षट्पदं धराधरं इति आपवत्सादिक्रमेण दूर्वादध्यक्षतादिभिः सम्पूज्य ईशानादिदिक्षु चरकी स्कन्दा विदारी अर्यमा ललना जम्भा पूतना पापराक्षसी पिलिपिच्छान्तैर्बहिर्देवताष्टकं पूजयेदिति । एकाशीतिपदे गृहवास्तौ मध्ये ब्रह्मा नवपदे मरीच्याद्याः षट्पदा ईशानाद्याः आपचन्द्राद्या द्विपदाः पदिकाबहिर्देवताश्च पूर्ववादसरक्षादिकं चेति एवं वास्तुं सम्पूज्य मर्माणि परिहृत्य शिलाप्रतिष्ठादिकं विदध्यात् । शिलाप्रतिष्ठाविधिः समाप्तः ॥

---

१ कोणके इति ख. ग. पाठः । २ भल्वाट इति क. ख. ग. पाठः । ३ आयवत्सो इति क. ख. पाठः । ४ वद्धं इति ख. ग. पाठः ।

## ॥ अथ प्रतिष्ठाविधिः ॥

तत्र स्थाप्यस्य[1] जिनबिम्बादेर्भद्रपीठादौ विधिना न्यसनं प्रतिष्ठा। तस्याश्च स्थापकत्रयं शिल्पी १ इन्द्रः २ आचार्य ३ श्चेति। तत्राद्यः सर्वाङ्गावयवरमणीयः क्षान्तिमार्दवार्जवसत्यशौचसम्पन्नः मद्यमांसादिभोगरहितः कृतज्ञो विनीतः शिल्पी सिद्धान्तवान् विचक्षणः धृतिमान् विमलात्मा शिल्पिनां प्रधानो जितारिषड्वर्गः कृतकर्मा निराकुल इति १। इन्द्रोऽपि विशिष्टजातिकुलान्वितो युवा कान्तशरीरः कृतज्ञो रूपलावण्यादिगुणाधारः सकलजननयनानन्दकारी सर्वलक्षणोपेतो देवतागुरुभक्तः सम्यक् रत्नालङ्कृतः व्यसनासङ्गपराङ्मुखः शीलवान् पञ्चाणुव्रतादिगुणयुतो गम्भीरः सितदुकूलपरिधानः कृतचन्दनाङ्गरागो मालतीरचितशेखरः कनककुण्डलादिभूषितशरीरस्तारहारविराजितवक्षस्थलः स्थपतिगुणान्वितश्चेति २। सूरिश्चार्यदेश[2]समुत्पन्नः क्षीणप्रायकर्ममलो ब्रह्मचर्यादिगुणगणालङ्कृतः पञ्चविधाचारयुतो राजादीनामद्रोहकारी श्रुताध्ययनसम्पन्नः तत्त्वज्ञो भूमिगृहवास्तुलक्षणानां ज्ञाता दीक्षाकर्मणि प्रवीणो निपुणः सूत्रपातादिविज्ञाने स्रष्टा सर्वतोभद्रादिमण्डलानामसमः प्रभावे आलस्यवर्जितः प्रियंवदो दीनानाथवत्सलः सरलस्वभावो वा सर्वगुणान्वितश्चेति। स च षष्ठाष्टमादितपोविशेषं विधाय कारापकानुकूले लग्ने हस्तादारभ्य नवहस्तान्तानां प्रतिमानामाद्यासु तिसृषु अष्टनवदशहस्तं इतरासु चतुर्हस्तादिप्रतिमासु हस्तद्वयवृद्ध्या, यद्वा एकहस्तादिक्रमेणैव द्वादशाद्विहस्तवृद्ध्या

१ स्थाप्यजित इति ग. पाठः। २ श्चोपदेश इति क. ग. पाठः।

प्रागेव मण्डपं प्रासादस्याग्रतः कारयित्वा तस्य प्राच्यामीशान्यां वा स्नानमण्डपमधिवासनामण्डपार्धेन निवेश्य लघुप्रतिमासु पञ्चषट्सप्तहस्तानि तोरणानि इतरासु च वसुवेदाङ्गुलाग्राणि न्यग्रोधोदुम्बराश्वत्थप्लक्षद्रुमसमुद्भवानि पूर्वादारभ्य शान्तिभूतियलारोग्यसंज्ञकानि तोरणान्यस्त्रशुद्धानि वर्मावगुण्ठितानि प्रणवेन विन्यस्य स्वमन्त्रैः स्वनामभिरभ्यर्च्य तच्छाखयोर्मेघमहामेघौ कालनीलौ जलाजलौ अचलभूलितौ प्रणवादिस्वाहान्तैः स्वनामभिः सम्पूज्य, ततो द्वारेषु कमलश्वेतइन्द्रप्रायरक्तकृष्णनीलमेघपीतपद्मवर्णाः पताकाश्च दत्त्वा मध्ये श्वेतचित्रे वा ध्वजे सम्पूज्य पाश्चात्यद्वारेण प्रविशेत्। ततः पश्चिमायां पूर्वाभिमुखो वा मण्डपनिरीक्षणप्रेक्षणताडनाभ्युक्षणावकिरणपूरणसमीकरणसेवनाकुट्टनसन्मार्जनोपलेपनाचक्रीकरणान्तैः कर्मभिः स्वस्वमन्त्रोपेतैः संस्कृत्य चन्दनच्छटाभिः सम्प्रोक्ष्योज्ज्वलस्वच्छभूतान्विचिन्तयन्[2] विनिक्षिप्य पुनस्तान् दर्भकूर्चिकया समाहृत्य[3] मण्डपस्य मध्ये यवाङ्कोपशोभितां[4] छत्रचामरभृङ्गारकलशध्वजदर्पणव्यजनसुप्रतीकाष्टमङ्गलकान्वितां वेदीं संस्थाप्य ततो वासुकिनिर्मोकलघुनी प्रत्यग्रवाससी दधानः कराङ्गुलीविन्यस्तकाञ्चनमुद्रिकः प्रकोष्ठदेशनियोजितकनककङ्कणः तपसा विशुद्धदेहो वेदिकायामुदङ्मुखमुपविश्य भूतशुद्धिं विधाय सकलीकरणार्घपात्रं कृत्वा इन्द्रादीनां कवचं विधाय सत्पुष्पाक्षतगन्धधूपपक्वान्नमनोहरं सर्वविघ्नशान्तये स्वयमाचार्य इन्द्रादिमूर्तिधरैः सह सर्वासु दिक्षु बलिं प्रक्षिप्य क्षेत्राधिपं पुष्पधूपाक्षतनैवेद्यदीपादिना सम्पूज्य हस्तौ

१ स्वीय इति क. पाठः। २ विचिन्तयित्वा इति पाठः। ३ समवृत्य इति ख. ग. पाठः। ४ यवारोप इति ग. पाठः।

पादौ च प्रक्षाल्य कृताचमनो वेदिकायामुपविश्य पञ्चवर्णेन रजसा स्वर्णवाहनायुधालङ्कृतान् लोकपालान् संलिख्य दधिदूर्वाक्षतादिभिर्वाहनायुधसमन्वितान् सम्पूज्य अनन्तरं मण्डपाद् बहिः कुमुदाञ्जनचमरपुष्पदन्ताभिधानान् क्षेत्रपालान् पूजयेत्। ततो हेमाद्येकतमं कुम्भमानीय गालिताम्भसा प्रपूर्य संहृतविकारेष्वासनं दत्त्वा तत्र मूर्तिरूपं कुम्भं विन्यस्य साङ्गं जिनेशं सम्पूज्य पूर्वद्वारि प्रशान्तशिशिरौ। दक्षिणे पर्जन्याशोकौ। पश्चिमे भूतसंजीवनामृतौ। उत्तरे धनेशश्रीकुम्भौ सवस्त्रौ[1] स्रक्सूत्रकण्ठौ सहिरण्यौ चूताश्वत्थदलभूषितवक्त्रौ बीजपूरादिफलसहितौ नन्द्यादिद्वाराधिष्ठितौ सम्पूज्य यथाक्रमं स्वस्वदिक्षु इन्द्रादिधरणेन्द्रान्तं लोकपालाधिष्ठितं कुम्भदशकम् ततोऽखण्डधारया भृङ्गारेण सह कुम्भमाभ्राम्य भो भोः शक्र यथा स्वस्यां दिशि विघ्नप्रशान्तये सावधानेन स्नानान्तं यावद्भवितव्यमिति। अनेन क्रमेण लोकपालान् सम्बोध्य। ततः स्नानमण्डपं दुग्धदधिसर्पिश्चन्दनं कुङ्कुमं सुमनसो धूपं तथा रत्नानि मृत्तिकाः कषायादिकं प्रतिष्ठोपयोगकारकव्रातं तथा रत्नफलसस्यौषधीअष्टवर्गादिसंज्ञकान् कुम्भान्विन्यस्य अस्त्रप्रोक्षितान् कवचावगुण्ठितान् स्वसंज्ञाभिरभ्यर्च्य क्षीरदधिसर्पिरिक्षुसमुद्ररूपान् परिकल्प्य वहिरन्यानपि कुम्भान् संस्थाप्य लोकपालायुधाङ्कितं शिलानवकं पञ्चकं वा तासु कलशोपेतं समानीय स्नानमुपक्रमेत्। सप्तधान्येन रत्नसमूहेन मृद्भिः कषायवर्गेण मूलिकाभिरष्टवर्गेणोदकान्तरचन्दनेन तीर्थाम्भोभिः पञ्चगव्यादिना संस्नाप्य रक्तवस्त्रैराच्छाद्य मण्डपं

[1] सवस्त्रौ सूत्र इति ख. ग. पाठः।

प्रदक्षिणाकृत्य पाश्चात्यद्वारेण प्रवेश्य वेदिकायां संस्थाप्य अधिवासनामन्त्रेणाधिवास्य पुष्पवासधूपादिभिः सम्पूज्य मुद्रान्यासं कृत्वा घर्माभिजसवाससा संच्छाद्य नैवेद्यं दत्त्वा अर्हदादीनि पञ्च तत्त्वानि विन्यस्य क्ष्मापतेजोयाताकाशगन्धरसरूपस्पर्शशब्दोपस्थपायुपादपाणिवाकनासिकाजिह्वाचक्षुस्त्वकश्रोत्रमनोऽहङ्कारबु-द्धय इति निष्ठुरया संनिरोध्य शिलां पूजयेत्। पूर्वादिशिलासु च तत्त्वानि सर्वाणि विन्यस्य निरोध्य पूजयेत् ॥ अथ शिलाकुम्भनामानि-नन्दा भद्रा जया रिक्ता चेति हस्तप्रमाणा अष्टाङ्गुलोच्छ्रिताः स्वस्तिकाङ्किताः शैलमये शैलमयाः इष्टिकामये तन्मयाः पद्म-महापद्म-शङ्ख-मरकत-समुद्राख्याः कुम्भा इति पञ्चमूर्तिपक्षः। नवपक्षे तु सुभद्र-विभद्र-सुदन्त-जय-विजय-पूर्व-उत्तर-संज्ञकाः शिलाः। सुनन्दा भद्रा जया पूर्णा अजिता विजया मङ्गला धरणीसंज्ञकाः मध्यस्था ब्रह्मरूपिणीति। ततः शिलां कुम्भांश्चादाय प्रासादस्थान-मागत्य गर्तासु ॐ अर्हं जिनाय नमः इति मध्यमगर्तायां कुम्भं विन्यस्य लग्नकाले सिद्धशक्तिं विन्यस्य संचिन्त्य ॐ ह्रीं जिनाय स्वाहेति मन्त्रमुच्चार्य नमस्कारेण शिलां निवेशयेत्। ततः पूर्वादिगर्तासु सिद्धानां शक्तिं विन्यस्य तदनन्तरं। ॐ लूं इन्द्राय नमः। ॐ रूं अग्नये नमः। ॐ सूं यमाय नमः। ॐ पूं नैर्ऋतये नमः। ॐ वूं वरुणाय नमः। ॐ शूं वायवे नमः। ॐ यूं कुबेराय नमः। ॐ हूं ईशानाय नमः। ॐ नागाय नमः। ॐ ब्रह्मणे नमः इति लोकेशमन्त्रैस्ताम्रमयकुम्भान् घृतमधुपूरितान् कृतस्रक्सूत्रकण्ठान् विन्यस्य तेषामुपरि शिलाः सं-

१ दशा अष्टाङ्गुल इति ख. पाठः। २ संतकाः शिला इति ख. पाठः। ३ ॐ ह्रीं इति ख. पाठः। ४ ॐ ल्लूं इत्यन्यत्र पाठः।

## ॥ अथ विम्बप्रतिष्ठाविधिः ॥

तत्र पूर्ववत् मण्डपद्वयं कृत्वा कारकसमूहमाहरेत् । सुवर्णरजतताम्रमयं मृन्मयं वा स्नानार्थं कलशाष्टकम् । आद्यकुम्भचतुष्कम् । वारकाणामष्टोत्तरशतं चतुरङ्गो वेदी मल्लकानां पञ्चाशत् वेणुयववारकान् शरावप्ररूढांश्च स्थपतिकुम्भं यवव्रीहिगोधूमतिलमाषमुद्गवल्लचणकमसूरतुवरीवणबीजनीवारश्यामकादिधान्यवर्गः ॥ १ ॥ हेमरजतताम्रकृष्णलोहत्रपुरीतिन त्रसूर्यकान्तनीलमहानीलमौक्तिकपुष्परागपद्मरागवैडूर्यादिरत्नवर्गः ॥ २ ॥ हेमरजतताम्रकृष्णलोहत्रपुरीतिकांस्यसीसकादिलोहवर्गः ॥ ३ ॥ न्यग्रोधोदुम्बराश्वत्थचम्पकाशोककदम्बाम्रजम्बूबकुलार्जुनपाटलावेतसकिंशुकादिकषायवर्गः ॥ ४ ॥ वल्मीकपर्वताग्रनद्युभयतटमहानदीसंगमकुशबिल्वमूलचतुष्पथदन्तिदन्तगोश्रृङ्गराजद्वारपद्मसरएकवृक्षादिमृत्तिकावर्गः ॥ ५ ॥ गङ्गायमुनामहीनर्मदासरस्वतीतापीगोदावरीसमुद्रपद्मसरस्ताम्रपर्णीनदीसङ्गमादिपानीयवर्गः ॥ ६ ॥ सहदेवीजयाविजयाजयन्तीअपराजिताविष्णुक्रान्ताशङ्खपुष्पीबलाअतिबलाहेमपुष्पीविशालानाकुलीगन्धनाकुलीसहवाराहीशतावरीमेदामहामेदाकाकोलीक्षीरकाकोलीकुमारीबृहतीद्वयं चक्राङ्कामयूरशिखालक्ष्मणादूर्वादर्भपतंजारीगोरम्भारुद्रजटालज्जालिकामेषश्रृङ्गीऋद्धिवृद्ध्याद्यौषधिवर्गः ॥७॥ ऋद्धिवृद्धिशतावरीप्रभृत्यष्टकवर्गः ॥ ८ ॥ वालकामलकजातिपत्रिकाप्रियङ्गुचनारोध्रयष्टीमधुकुष्ठदेवदारुउशीरऋद्धिवृद्धिशतावरीप्रभृत्यष्टकवर्गः ॥ ९ ॥ सिल्हककुष्ठकमांसीमुरमांसीश्रीखण्डागुरुकर्पूरनखपूतिहरिद्राग्रन्थिपर्णकमुस्ताकुष्ठादिसर्वौषधिवर्गः ॥ ९ ॥ सिल्हककुष्ठकमांसीमुरमांसीश्रीखण्डागुरुकर्पूरनखपूतिकेशादिगन्धवर्गः ॥ १० ॥ वासाश्रीखण्डकुङ्कुमकर्पूरमुद्रिकाकङ्कणमदनफलानि रक्तसूत्रं ऊर्णासूत्रं लोहमुद्रिका

ऋद्धिवृद्धियुतं कङ्कणं यवमा[1]लिकातर्कुका शिलागोरोचनाश्वेतसर्षपासितयुगाद्वयं पट्टाच्छादनं पटलकानि घण्टाः धूपदहनकानि रजतवट्टि[2]कां सुवर्णशलाकां कांस्यवट्टिकां आदर्शः नालिकेरबीजपूरककदलकनारङ्गाम्रजम्बूकूष्माण्डवृन्ताकामलकबदरादिप्रशस्तफलवर्गः। पूगीफलनागवल्लीदलानि मातृपुटिकानां शतमष्टोत्तरम्। अखण्डतण्डुलानां सेतिका इक्षुयष्टिका पुष्पाणां चय इति प्रचुरमानीयोत्तमवेदिकायां कारकजातं विन्यस्य हस्तशतप्रमाणायां भुवि जीवरक्षादिना क्षेत्रशुद्धिं विदध्यात्। तथाचोक्तम्॥ [3]काउं खेत्तविसुद्धिं मङ्गलकोउयजुयं मणभिरामम्। वत्थुं जत्थ पइट्ठा कायव्वा वीयरायस्स॥ १॥ इति तदनु पूर्ववत् मण्डपप्रदेशं विधाय ततो मङ्गलार्थमादौ चैत्यवन्दनं शान्त्यर्थं देवतानां च कायोत्सर्गाणि कृत्वा तदनु वेदिकायामुपविश्य ॐनमो अरिहंताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमोलोएसव्वसाहूणं ॐनमोसव्वोसहिपत्ताणं ॐनमोविज्जाहराणं ॐनमो आगासगामीणं ॐ कं क्षं नमः [4]अशुचिः शुचिर्भवामि स्वाहेति पञ्चसप्तवारान् सुरभिमुद्रया शुचित्वापादनायात्मनि शुचिविद्यां विन्यस्य श्रीमदर्हदादिमन्त्रैरात्मनो रक्षां कुर्यात्। तथाचागमः॥ [5]सुइविज्जाए सुइणा पंचंगाबद्धपरियरेण चिरा। निसिऊण जहाठाणं दिसि देवयमाइए सव्वे॥१॥एवं सन्नद्धगत्तो य सुइ दक्खो जिइंदिओ। सियवत्थपाउरंगो पोस-

१ मालिकाशिला इति ग. पाठः। २ पट्टिकां इति ग. पाठः। ३ कृत्वा क्षेत्रविशुद्धिं मङ्गलकौतुकयुतं मनोभिरामम्। वस्तु यत्र प्रतिष्ठा कर्तव्या वीतरागस्य॥ १॥ ४ अशुर्चि इति क. पाठः। ५ शुचिविद्यया शुचिना पंचंगाबद्धपरिकरेण चिरात्। न्यस्य यथास्थानं दिशि देवतादिकाः सर्वे॥ १॥ एवं संनद्धगात्रश्च शुचिर्दक्षो जितेन्द्रियः। सितवस्त्रप्रावृताङ्गः पौषधिकः करोति च प्रतिष्ठाम्॥ २॥

द्धिओ कुणइ अ पइट्ठम् ॥ २ ॥ ततश्च श्रद्धायुक्तं शुचितपसा शुद्धदेहं शेखरकटककेयूरकुण्डलमुद्रिकाहारवैकक्षादिषोडशाभरणोपेतं देवस्य दक्षिणभुजाश्रितमिन्द्रं परिकल्पयेत् । उक्तंच । उंइयदिशासु विणिवेसियस्स दक्खिणभुयाणुमग्गेण । उत्तमसियवत्थविनसिएणं कयसुकयकम्मेणं ॥ १ ॥ तदनन्तरमिन्द्रस्य मन्त्रमयं कवचं कृत्वा ॐनमोअरिहन्ताणं नमोसिद्धाणं नमोआयरियाणं नमोआगासगामीणं नमोचारणाइलद्धीणं जे इमे किंनरकिंपुरिसमहोरगगंरुलसिद्धगन्धव्वजक्खरक्खसभूयपिसायडाइणिपभइ जिणघरणिवासिणो नियनियनिलयट्ठिया य वियारिणो सन्निहिया य असन्निहिया य ते सव्वे विलेवणपुप्फधूवपईवसणाहं वलिं पडिच्छन्तु तुट्ठिकरा भवन्तु सिवंकरा भवन्तु सन्तिकरा भवन्तु सत्थयणं कुणन्तु सव्वजिणाणं संनिहाणं भावओ पसन्नभावेण सव्वत्थ रक्खं कुणंतु सव्वदुरियाणि नासन्तु सव्वासिवं उवसमन्तु सन्तिपुट्ठितुट्ठिसिवसत्थयणकारिणो भवन्तु स्वाहेत्यादिमन्त्रेण चिन्नोच्चाटनाय भूतवलिं प्रक्षिपेत् । ततः प्रतिमाकोणेषु स्रक्सूत्रफलान्वितान् चतुःकुम्भान् संस्थाप्य ॐह्रां ललाटे । ॐह्रीं वामकर्णे । ॐह्रूं दक्षिणकर्णे ॐह्रौं शिरसि पश्चिमभागे । ॐह्रः मस्तकोपरि । ॐक्ष्मां नेत्रयोः । ॐक्ष्मीं मुखे । ॐक्ष्मूं कण्ठे । ॐक्ष्मौं हृदये । ॐक्ष्मः बाह्वोः । ॐक्रों उदरे । ॐह्रीं कट्यां । ॐह्रूं जङ्घयोः । ॐक्ष्मूं पादयोः । ॐक्ष्मः हस्तयोरिति कुङ्कुमश्रीखण्डकर्पूरादिना चक्षुःप्रतिस्फोटादिनिवारणाय प्रति-

१ उचितदिशासु निनिवेशितस्य दक्षिणभुजानुमार्गेण । उत्तमसितवस्त्रविन्यसितेन कृतसुकृतकर्मणा ॥१॥ २ रगहलइति ख. पाठः । ३ सिग्गकरा इति क. पाठः । ४ ह्रीं पाठान्तरम् । ५ हूं पाठान्तरम् । ६ हूं पाठान्तरम् । ७ अः पाठान्तरम् ।

मायां विलिखेत् । तदनु ॐ ह्रूं क्ष्रूं फुट् किरिटि किरिटि घातय घातय परविघ्नानास्फोटयास्फोटय सहस्रखण्डान् कुरु कुरु परमुद्रां छिन्द छिन्द परमन्त्रान् भिन्द भिन्द क्षः फट् स्वाहेत्यनेन श्वेतसर्षपान् परिक्षिप्य दिग्बन्धाय पूर्वादिकाष्ठासु विनिक्षिप्य तदनु चाचार्यश्चतुरः कलशान् गालिताम्भसा प्रपूर्य पुष्पाक्षतादिभिः सम्पूज्य मन्त्रैरालभ्य स्थपतिं च वस्त्रालङ्कारताम्बूलादिना संपूज्य मुद्रितं कलशं समर्प्य शेषांश्चेन्द्रादीनां समर्प्येष्टांशसमये सूत्रधारकलशपुरःसरां प्रतिमां स्नापयेत् । इति प्रथमं कलशस्नानम् ॥ ततः सप्तधान्यरत्नमृत्तिकाकषायौषधिअष्टवर्गसर्वौषधिपञ्चामृतगन्धवासचन्दनकुङ्कुमकर्पूरतीर्थोदकादियुक्तैः स्वस्वमुद्राभिमन्त्रितैः कुम्भैः स्नापयेदिति ॥ अत्र स्नानमन्त्राः । ॐनमो यः सर्वशरीरावस्थिते महाभूते आइजलं गृह्ण गृह्ण स्वाहेति प्रथमस्नानषट्कस्यायं मन्त्रः । ॐनमो यः सर्वशरीरावस्थिते पृथु विपृथु विपृथु गन्धं गृह्ण गृह्ण स्वाहेत्यष्टवर्गादिस्नानसमूहस्यायं मन्त्रः । ॐनमो यः सर्वशरीरावस्थिते मेदिनि पुरु पुरु पुष्पवति पुष्पं गृह्ण गृह्ण स्वाहेति समस्तस्नानानां पुष्पमन्त्रोऽयम् । ॐनमो यः सर्वशरीरावस्थिते दह दह महाभूते तेजोधिपतये धूपं गृह्ण गृह्ण स्वाहेति समस्तस्नानानां धूपमन्त्रोऽयम् । तदेवमाकारशुद्धिं विधाय परमेष्ठिमुद्रया प्रतिमायां भगवन्तमावाहयेत् । ॐनमोऽर्हत्परमेश्वराय चतुर्मुखपरमेष्ठिने त्रैलोक्यनताय अष्टदिक्कुमारीपरिपूजिताय देवाधिदेवाय दिव्यशरीराय त्रैलोक्यमहिताय आगच्छ आगच्छ[1] स्वाहा । ततोऽभिमन्त्रितचन्दनेन प्रतिमां सर्वाङ्गं समालिप्य[2] अञ्जलिमुद्रया पुष्पाण्यधिरोप्य धूपं चोद्ग्राह्य वासान् प्रक्षिप्य

१ आगच्छ २ इत्यन्यत्र । २ समालभ्या क. ख. पाठः ।

मूलमन्त्रेण संपूज्य हृदये संस्थाप्य मण्डपं प्रदक्षिणीकृत्य हिरण्यकांस्यवसुरत्नकरम्बकप-
श्वेतवाससा प्रच्छाद्य मूलमन्त्रेण संपूज्य हृदये संस्थाप्य मण्डपं प्रवेश्य भद्रपीठे संस्थाप्य अग्रतः
दर्कमप्रक्षेपपूर्वकं नीत्वा मण्डपाग्रे हृदये रथात्समुत्तार्य पश्चिमद्वारेण मण्डपं प्रवेश्य भद्रपीठे संस्थाप्य अग्रतः चतुरस्रं क्षेत्रं
पीठिकायां नन्द्यावर्ताख्यमण्डले मन्त्रान् सम्पूजयेत्। तत्र चन्दनानुलिप्ते श्रीपर्णीफलके पूर्ववत् चतुरस्रं क्षेत्रं
संसाध्य अग्रस्थानात् सूत्रक्रमेण सप्तवृत्तानि कृत्वा प्रथमवृत्ते तद्वृत्तप्रमाणां कर्णिकां तन्मध्ये नवकोणं नन्द्यावर्तं,
पूर्वादिदिक्षु वज्रयवाङ्कुशसुमनोदामानि च लिखित्वा। ततो द्वितीयवृत्ते मूलमध्याग्रेषु शुक्लरक्तपीतं केसरजालं
चतुर्विंशतिमातृयुतं तृतीयादिवृत्तेषु चतुर्विंशतिषोडशाष्टपत्रसंख्यया क्रमेण पद्मानि च निष्पाद्य आग्नेयनैर्ऋ-
तनायव्येशानासु द्वादशगणान्विलिखेत्। बहिश्चतुर्द्वारान्वितं प्राकारत्रयं श्रीशान्तिभूतिबलारोग्यसंज्ञकैस्तो-
रणैरलङ्कृतं धर्ममानगजसिंहध्वजैः समन्वितमालिख्यानन्तरं प्रथमप्राकारपूर्वादिद्वाराभ्यन्तर उभयपार्श्वे कन-
कपीतसितारक्तकृष्णवर्णानि वैमानिकव्यन्तरज्योतिष्कभवनपतिदेवानां युगलानि प्रथमप्राकारद्वारपालान्
वज्रदण्डधनुःपरशुसमन्वितान् सोमयमवरुणकुबेराख्यान्मध्ये च यष्टिहस्तं तुम्बुरुदेवं विलिख्य। ततो द्वितीय-
प्राकारद्वारेषु जया विजया अजिता अपराजिताभिधाना द्वारपालीः। तृतीयप्राकारद्वारेषु तुम्बुरुं चाभिलिख्य तदनु
द्वितीयप्राकारान्तरे तिरश्चः तृतीयप्राकारान्तरे वाहनानि बाह्यभूमौ मनुष्यदेवानालिख्य। चतुर्द्वारोभयपार्श्वेषु
पद्मिनीखण्डमण्डिताः पुष्करिणीर्विलिखेत्। ततो वज्रलाञ्छितमिन्द्रपुरं दत्वा दिक्षु परविद्याक्षः क्षुद्र कोणेषु परमं-

१ कर्णिकान्तर्मध्ये इति ख. पाठः। २ नन्द्यावर्त इति पाठः। ३ तंबुरुं क. तुंबरुं इति पाठः। ४ तिरि—तृतीय इति क. पाठौ।

त्रा क्षः फुट् चतुःकोणेषु पद्मासनानि समारोप्य पद्मपिधानांश्चतुरो मङ्गलकलशान् लिखित्वा बाह्ये वायुभवनं दद्यात्। इत्येतत्सर्वं कर्पूरगोरोचनामृगमदमिश्रेण कुङ्कुमरसेन काञ्चनतूलिकया सन्मण्डलं विलिखेत्। तदनु तन्मध्यकर्णिकायां भगवन्तमावाह्य पुष्पाक्षतचन्दनादिभिः सम्पूज्य पूर्वपश्चिमदक्षिणोत्तरासु सिद्धादिचतुष्कं आग्नेयनैर्ऋतवायव्यैशानेषु ज्ञानादिचतुष्कं च पूजयेत्। ततो दक्षिणभागे देवस्य शक्रश्रुतदेवते[1] उत्तरतश्चेशानशान्तिदेवते सम्पूज्य केसरेषु मातृगणं प्रणवादिनमोन्तं सम्पूजयेत्। तदनु पत्रेषु जयादिदेवताचतुष्टयमाग्नेयादिषु जम्भादिदेवतागणं बहिश्चतुर्विंशत्यब्जपत्रेषु लोकान्तिकदेवतागणं अनन्तरषोडशपत्रेषु विद्याषोडशकमभ्यर्च्य। उपरितनपद्मद्वये[2] क्रमेण वैमानिकदेवान् सदेवीकान् दिक्पालांश्च सम्पूज्य ततो द्वादशगणादिकमशेषमपि देवतागणं मण्डलध्वजतोरणादिकं च पुष्पाक्षतादिभिरभ्यर्चयेत्। तथाचोक्तम्। *मज्झे य नसेयव्वं नन्दावज्जं जवं कुसं सुमणम्। तस्सोवरि ट्ठविज्जा पडिमा देवस्स इत्था(च्छा)ए ॥१॥ मज्झे निरञ्जणजिणो पुव्वावरदाहिणोत्तरदिसासु[3]। तह सिद्धसुरूवज्झायसाहूसुति(इ?)रयणतियनासो ॥२॥ केसरनिलये तह मायरो य मरुदेवि विजय[4] सेणा य। सिद्धत्था तह

१ शक्तश्रुत इति क. पाठः। २ उपरिपद्म इति क. पाठः। ३ पुव्वेवर इति ग. पाठः। ४ विजयमाणाय इति क. पाठः।

* मध्ये च न्यासयितव्यं नन्दा( वर्त )वज्रं यवमङ्कुशं सुमनः। तस्योपरि स्थापयेत् प्रतिमां देवस्य इच्छायाः ॥ १ ॥
मध्ये निरञ्जनजिनः पूर्वापरदक्षिणोत्तरदिशासु। तथा सिद्धसूर्युपाध्यायसाधुशुचिरत्नत्रयन्यासः ॥ २ ॥
केसरनिलये तथा मातरश्च मरुदेवी विजया सेना च। सिद्धार्था तथा मङ्गला सुसीमा पृथ्वी च लक्ष्मणा ॥ ३ ॥

मङ्गलसुमीमपुहवीयलक्खणया ॥ ३ ॥ रामो नन्दा विण्हू जेयसामी सुजसे सुधयी अइरा । [1]सिरिदेवीय पहा-वइ तत्तो पउमावइ वप्पी ॥ ४ ॥ सिवे वम्मी तिसलाविय मायाए नामरूवा उ । ॐनमो पुव्वं अन्ते साहा त्ति तओ य वत्तव्वम् ॥ ५ ॥ लोयंतियदेवाणं तत्तो चउवीसपरिगणो नमिउं । सगमंतेहिं विहिणा सोलसविज्जा-गणो य तओ ॥ ६ ॥ पुव्वोत्तराइ(सु)रोहिणीपन्नत्ती वज्जसंकला तह य । वज्जंकुशीय अप्पडिचक्का तह पुरिसदत्ता य ॥ ७ ॥ काली य महाकाली गौरी गंन्धारी जालमाला य । माणवि वइरोट्टाऽच्छुत्ता माणसि महामाणसी चेव ॥ ८ ॥ वेमाणिया य देवा तओ य चउविहा सदेवीया । इंदाइ दिसाइवई नसेज्ज नियएहिं मंतेहिं ॥ ९ ॥ दारे य ठाइ सोमो यमवरुणोय तह कुयेरोय । हत्थेसुं यं रइउं धणुदण्डपासगयगाहिणो तहय ॥ १० ॥

---

रामा नन्दा विष्णुर्जया श्यामा सुयशाः सुव्रता अचिरा । श्री देवी च प्रभावती ततः पद्मावती वप्रा ॥ ४ ॥

शिवा वामा त्रिशलापि च मातॄणां नामरूपापि तु । ॐनमः पूर्वं अन्ते स्वाहेति ततश्च वक्तव्यम् ॥ ५ ॥

लोकान्तिकदेवानां ततश्चतुर्विंशतिपरिगणं नत्वा । स्वमन्त्रैर्विधिना षोडशविद्यागणश्च ततः ॥ ६ ॥

पूर्वोत्तरादिषु रोहिणी प्रज्ञप्तिर्वज्रशृङ्खला तथाच । वज्राङ्कुशी च अप्रतिचक्रा तथा पुरुषदत्ता च ॥ ७ ॥

काली च महाकाली गौरी गन्धारी ज्वालामाला च । मानवी वैरोट्या अच्छुप्ता मानसी महामानसी चैव ॥ ८ ॥

वैमानिकाश्च देवास्ततश्च चतुर्विधाः सदेवीकाः । इन्द्रादिदिशाधिपतीन्न्यसेत् निजैर्मन्त्रैः ॥ ९ ॥

द्वारे च तिष्ठति सोमः यमो वरुणश्च तथा कुबेरश्चा । हस्तेषु च रचयित्वा धनुर्दण्डपाशगदाग्राहिणस्तथाच ॥१०॥ १ वर इति मत्यन्तरे पाठः।

सक्को य जिणासन्नो णाणादेवा जहोइया वारे। पडिहारोविय तुंबरु मंतोय णमो तओ साहा ॥११॥ एवं नसिउं सव्वं पुज्जेउं विविहगन्धमल्लेहिं । नसियव्वो पञ्चंगो मंतो पडिमा य जत्तेणं ॥ १२॥ इति। अथ नन्दावर्त्तपूजामन्त्राः। ॐनमो अर्हते जिनाय रजोहननायाऽघोरस्वभावाय निरतिशयपूजार्हाय अरुहाय भगवते ह्रां अर्हत्परमेष्ठिने स्वाहा। ॐनमः स्वयम्भुवे अजराय मृत्युंजयाय निरामयाय अनिधनाय भगवते निरञ्जनाय ह्रीं सिद्धपरमेष्ठिने स्वाहा। ॐनमः पञ्चविधाचारवेदिने तदाचरणशीलाय तत्प्रवर्तकाय ह्रूं आचार्यपरमेष्ठिने स्वाहा। ॐनमो द्वादशाङ्गपरमस्वाध्यायसमृद्धाय तत्प्रदानोद्यताय ह्रौं उपाध्यायाय ब्रह्मणे स्वाहा। ॐनमः स्वर्गापवर्गसाधकाय ह्रः साधुमहात्मने स्वाहा ॥ पञ्चपरमेष्ठिपूजामन्त्राः। ॐनमः परमाभ्युदयनिःश्रेयसहेतवे ज्ञानाय नमः। रत्नत्रयादीनां मन्त्राः। ॐनमः शुचित्वापादिकायै शुचिविद्यायै स्वाहा। ॐनमः सौधर्मकल्पोत्तरस्थितये ऐरावतवाहनाय वज्रपाणिशचीपतिविबुधाधीशभास्वत्किरीटप्रच्युतिसमनन्तरापवर्गभाक्शक्राय स्वाहा। ॐनमो दक्षिणपार्श्वासीनधवलमूर्तिवरदपद्माक्षसूत्रपुस्तकालङ्कृतानेकपाणिद्वादशाङ्गश्रुतदेवाधिदेवते सरस्वत्यै स्वाहा। ॐनमो ईशानकल्पोत्तरस्थितये गजवाहनसदेवीकदिव्यायुधपाणिदेवाधीशकनककिरीटोद्भासिने ईशानाय स्वाहा। ॐनमो

---

शक्रश्च जिनासन्नो नानादेवा यथोदिता द्वारे। प्रतिहारोपि च तुम्वरुः मन्त्रश्च नमस्ततः स्वाहा ॥ ११ ॥
एवं न्यस्य सर्व पूजयित्वा विविधगन्धमाल्यैः। न्यासयितव्यः पञ्चाङ्गो मन्त्रः प्रतिमा च यत्नेन ॥ १२ ॥

१ देवादिदेव इति ग. पाठः। २ मरुदेवीक इति ख. पाठः।

वामपार्श्वासीनधवलद्युतिवरदकमलपुस्तककमण्डलुभूषितानेकपाणिसकलजनशान्तिकारिके शान्तिदेव्यै स्वाहा। ॐनमो दिव्यरत्नात्मने नन्दावर्ताय स्वाहा । ॐनमः सर्वरक्षाविधायिने वज्राय स्वाहा । ॐनमो जयाभ्युदयात्मने यवाय स्वाहा । ॐनमः समस्तविघ्नविनाशकाय अङ्कुशाय स्वाहा । ॐनमो मङ्गलात्मने सुमनोदामाय स्वाहा । इति शक्रादीनां मन्त्राः । ॐनमो मरुदेव्यै सपुत्रिकायै स्वाहा । इत्यादिमातृकादिगणमन्त्राः । ॐनमः पूर्वोत्तरादिग्निवासिभ्यः सारस्वतेभ्यः स्वाहा ॥ १ ॥ ॐनमः पूर्वदिग्निवासिभ्य आदित्येभ्यः स्वाहा ॥ २॥ ॐनमः पूर्वदक्षिणादिग्निवासिभ्यो वह्निभ्यः स्वाहा ॥३॥ ॐनमो दक्षिणदिग्निवासिभ्यो वरुणेभ्यः स्वाहा ॥ ४ ॥ ॐनमो दक्षिणापरदिग्निवासिभ्यो गर्दतोयेभ्यः स्वाहा ॥ ५ ॥ ॐनमो अपरदिग्निवासिभ्यस्तुषितेभ्यः स्वाहा ॥ ६ ॥ ॐनमो अपरोत्तरदिग्निवासिभ्योऽव्याबाधेभ्यः स्वाहा ॥ ७ ॥ ॐनम उत्तरादिग्निवासिभ्योऽरिष्टेभ्यः स्वाहा ॥८॥ ॐनमः सारस्वतादित्यान्तरनिवासिअग्न्याभ ॥ ९ ॥ सूर्याभेभ्यः स्वाहा ॥ १० ॥ ॐनमः आदित्यवह्न्यन्तरनिवासिचन्द्रायस्वाहा ॥ ११ ॥ सत्याभेभ्यःस्वाहा ॥ १२ ॥ ॐनमोवह्निवरुणान्तरनिवासिश्रेयस्कर ॥ १३ ॥ क्षेमंकरेभ्यः स्वाहा ॥ १४ ॥ ॐनमोवरुणगर्दतोयान्तरनिवासिवृषभाभ ॥ १५ ॥ काम[2]चारेभ्यः स्वाहा ॥ १६ ॥ ॐनमो गर्दतोयतुपितान्तरनिवासिनिर्माणराजो ॥ १७ ॥ दिशान्तरक्षितेभ्यः स्वाहा ॥ १८ ॥ ॐनमस्तुपिताव्यायाधान्तरनिवास्यात्मरक्षित ॥ १९ ॥ सर्वरक्षितेभ्यः स्वाहा ॥ २० ॥ ॐनमो अव्याबाधारिष्टान्तर-

१ तोयोत्तर इति ख. ग. पाठः । २ कामवरेभ्य इति ख. पाठः ।

निवासिमरु ॥ २१ ॥ वसुभ्यः स्वाहा ॥ २२ ॥ ॐनमो अरिष्टसारस्वतान्तरनिवास्यश्व ॥ २३ ॥ विश्वेभ्यः स्वाहा ॥ २४ ॥ एते चतुर्विंशतिनिकाये लोकान्तिकदेवानां पूजामन्त्राः ॥ ॐनमः पूर्वदिग्दलासीनइन्दुधवलविग्रहशङ्ख-कार्मुकादिप्रहरणानेकपाणिरोहिण्यै स्वाहा ॥ ॐनमः पूर्वदिग्दलान्तरासीनकुवलयद्युतिदेहशक्त्यादिप्रहरणानेक-पाणिप्रज्ञप्तिकायै स्वाहा। ॐनमः पूर्वदक्षिणदिग्दलासीनहेमावदाततनुलोहशृङ्खलाद्यायुधविविधकरवज्रशृङ्खलायै स्वाहा। ॐनमः पूर्वदक्षिणदिग्दलान्तरासीनकनककान्तिमूर्तिवज्राङ्कुशकुन्तादिशस्त्रबहुभुजभीममहावज्राङ्कुशायै स्वाहा। ॐनमः दक्षिणदिग्दलासीनजाम्बूनदाभविशुद्धशरीरवचश्चचक्रवज्राद्यलङ्कृतानेककराप्रतिचक्रायै स्वाहा। ॐनमः दक्षिणदिग्दलान्तरासीनसुवर्णवर्णमूर्ति–सितनिवसनाद्यनेकहेतिप्रायबाहुपुरुषदत्तायै स्वाहा । ॐनमो दक्षिणापरदिग्दलासीनस्निग्धाञ्जननिभतनुगदाद्यायुधाद्यनेककरकलितकालिकायै स्वाहा। ॐनमो दक्षिणापरदि-ग्दलासीनातसीकुसुमकान्तिमूर्तिवज्राद्यायुधानेककर्ममहाकालिकायै स्वाहा । ॐनमो अपरदिग्दलासीनकनक-कान्तिकायपद्मायुधवरबाहुगौर्यै स्वाहा । ॐनमो अपरदिग्दलान्तरासीनशुककान्तिमूर्तये वज्रमुशलाद्यायु-धसमृद्धानेककरगन्धार्यै स्वाहा । ॐनमो अपरोत्तरदिग्दलासीनामृतफेनपिण्डपाण्डुरशरीराकारज्वलन्महाज्वा-लादिमहाभयङ्करकरप्रहरणानेकभीमभुजज्वालामात्रे[1] स्वाहा। ॐनमः अपरोत्तरदिग्दलान्तरासीनमरकतश्यामा-ङ्गोन्मूलिततरुवरादिप्रहरणानेकभीमकरमानव्यै स्वाहा। ॐनमः उत्तरदिग्दलासीनप्रियङ्गुपुष्पद्युतितनुभीमभुज-

१ ज्वालायै इति पाठान्तरम् ।

कावदातद्युतिवैमानिकयुगलकाभ्यां स्वाहा । ॐनमः प्रथमप्राकारदक्षिणद्वाराभ्यन्तरतोरणोभयपार्श्वव्यवस्थितमवलद्युतिव्यन्तरयुगलकाभ्यां स्वाहा। ॐनमः प्रथमप्राकारपश्चिमद्वाराभ्यन्तरतोरणोभयपार्श्वव्यवस्थितरक्तद्युतिज्योतिष्कयुगलकाभ्यां स्वाहा । ॐनमः प्रथमप्राकारोत्तरद्वाराभ्यन्तरतोरणोभयपार्श्वाश्रितकृष्णद्युतिभवनपतियुगलकाभ्यां स्वाहा॥ इति वैमानिकादियुगलानां मन्त्राः ॥ ॐनमः पूर्वदिग्लोकाधिपतिकार्मुकव्यग्रपाणिपूर्वद्वारे तिष्ठ २ सोमाय स्वाहा । ॐनमो दक्षिणदिग्लोकेशदण्डव्यग्रपाणि दक्षिणद्वारे तिष्ठ २ यमाय स्वाहा । ॐनमो अपरदिग्लोकाधिरक्षपाशहस्तापरद्वारि तिष्ठ २ वरुणाय स्वाहा। ॐनम उत्तरदिग्लोकपालमहागदाव्यग्रहस्तोत्तरद्वारि तिष्ठ २ वैश्रवणाय स्वाहा॥ इति प्रथमप्राकारद्वारपालपूजामन्त्राः॥ ॐनमः पूर्वदिग्द्वाराधिदेवते सितद्युतिअभयपाशाङ्कुशमुद्गरव्यग्रपाणि पूर्वद्वारि तिष्ठ २ जये स्वाहा । ॐनमो दक्षिणदिग्द्वाराधिदेवते रक्तद्युतिअभयपाशाङ्कुशमुद्गरालङ्कृतपाणि दक्षिणद्वारे तिष्ठ २ विजये स्वाहा । ॐनमो अपरदिग्द्वाराधिदेवते कनकप्रभे अभयपाशाङ्कुशमुद्गरव्यग्रपाणि पश्चिमद्वारे तिष्ठ २ अजिते स्वाहा । ॐनम उत्तरदिग्द्वाराधिदेवते श्यामद्युतिअभयपाशाङ्कुशमुद्गरालङ्कृतपाणि उत्तरद्वारे तिष्ठ २ अपराजिते स्वाहा॥ इति द्वितीयप्राकारद्वारपालानां पूजामन्त्राः॥ ॐनमो भगवदर्हत् प्रतिपन्नप्रतिहारभावत्वेनाधिष्ठितद्वाराभ्यन्तराय जटामुकुटधारिणे नरशिरःकपालमालाभूषितशिरोधराय खट्वाङ्गपाणये तुम्बरवे स्वाहा॥ इति तुम्बरुपूजामन्त्रः॥ ॐनमो न्यग्रोधात्मकेभ्यः

१ व्यग्र इति पाठान्तरम् ।

स्वाहा । ॐनमः ऊर्ध्वदिगन्तराध्यासिने अच्युतोत्तरस्थितये अप्रतिहतपरमानन्दाय ब्रह्मणे स्वाहा ॥ ॥ इति दिग्देवतानां पूजामन्त्राः॥ ॥ ॐनमः पूर्वदिग्दलासीनरक्तद्युतिअक्षसूत्रकमण्डलुपाणिसकलजनकर्मसाक्षिणे आदित्याय स्वाहा । ॐनमो अपरोत्तरदिग्दलासीनधवलद्युतिअक्षमालाकमण्डलुपाणिअमृतात्मने सोमाय स्वाहा ॥ ॐनमो दक्षिणदिग्दलासीनरक्तप्रभाक्षवलयकुण्डिकालङ्कृतपाणितेजोमूर्तये मङ्गलाय स्वाहा। ॐनमः उत्तरदिग्दलासीनहेमप्रभाक्षसूत्रकमण्डलुव्यग्रपाणये बोधात्मने बुधाय स्वाहा ॥ ॐनमः उत्तरपूर्वदिग्दलासीनहरितालद्युतिअक्षसूत्रकुण्डिकायुतपाणित्रिदशमन्त्रिणे बृहस्पतये स्वाहा ॥ ॐनमः पूर्वदक्षिणदिग्दलासीनधवलवर्णाक्षसूत्रकमण्डलुपाणिअसुरमन्त्रिणे शुक्राय स्वाहा ॥ ॐनमो अपरदिग्दलासीनासितद्युतिअक्षवलयकुण्डिकालङ्कृतपाणिलम्बकूर्चभासुरमूर्तये शनैश्चराय स्वाहा ॥ ॐनमो दक्षिणापरदिग्दलासीनातिकृष्णवर्णपाणिद्वयविहितार्घमुद्रमहातमःस्वभावाय राहवे स्वाहा ॥ ॐनमः पूर्वदिग्दलासीनधूम्रवर्णद्युतिअक्षसूत्रकुण्डिकालङ्कृतपाणिद्वयानेकस्वभावात्मने केतवे स्वाहा ॥ इति ग्रहदेवतानां पूजामन्त्राः ॥ ॐनमो दक्षिणदिग्भागासीनस्निग्धाञ्जनद्युतिमुद्गरपाशडमरुकाद्यनेकशस्त्रालङ्कृतानेकपाणिकामचारिणे क्षेत्रपालाय स्वाहा । ॐनमः पूर्वदक्षिणदिग्व्यवस्थितगणधरादित्रिकाय स्वाहा । ॐनमो दक्षिणापरदिग्भागावस्थितभवनपत्यादिदेवीत्रिकाय स्वाहा । ॐनमो अपरोत्तरदिग्व्यवस्थितभवनपत्यादिदेवत्रिकाय स्वाहा। ॐनमः उत्तरपूर्वदिग्व्यवस्थितवैमानिकादित्रिकाय स्वाहा ॥ इति द्वादशगणपूजामन्त्राः ॥ ॐनमः प्रथमप्राकारपूर्वद्वाराभ्यन्तरतोरणोभयपार्श्वव्यवस्थितकन

विति। ॐनमो भगवओ उसभसामिस्स पढमतित्थयरस्स सिज्झउमे भगवई महाविज्जा जेण सवेण इंदेण मघदेयसमुदयेण मेरुम्मि सव्वोसहीहिं सवे जिणा अहिसित्ता तेण सवेण अहिवासयामि सुवयं दढवयं सिद्धं गुद्धं सम्मं दंसणमणुपत्तं हिरि हिरि सिरि सिरि मिरि मिरि गुरु गुरु अमले अमले विमले विमले सुविमले सुविमले मोक्खमग्गमणुपत्तो स्वाहा। अहवा ॐनमो खीरासवलद्धीणं ॐनमो महुआसवलद्धीणं ॐनमो संभिण्णसोइणं ॐनमो पयाणुसारीणं ॐनमो कुट्ठबुद्धीणं जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ ॐकंक्षः स्वाहा॥ अधिवासने विधे॥ ॐनमो वग्गु २ निवग्गु २ सुमिणे सोमणसे महु महुरे जयंते अपराजिए स्वाहा॥ सौभाग्यविद्या॥ अनन्तरमाचार्यः सौभाग्यमन्त्रेण सप्तवारान् परिजप्य कङ्कणं मदनफलं यवमालिकां च निबन्धयेत्॥ तदनु क्ष्मातेजोवाय्वाकाशपादपाणिपायुउपस्थवाकघ्राणजिह्वाचक्षुस्त्वक्श्रोत्रमनःप्रभृतीनि तत्त्वानि संस्थाप्य अनन्तरमारोग्यकान्तिसौरभ्यप्रस्वेदरहिततत्वमसृक्मांसयोः शुभ्रत्वं आहारनीहारयोरदृश्यत्वं निःश्वाससुगन्धतेति सहजगुणकदम्बकं विन्यसेत्। ॐनमो विश्वरूपाय अर्हते केवलज्ञानदर्शनधराय हूं ह्रौं सः सहजगुणान् जिनेशे स्थापयामि स्वाहा॥ सहजगुणस्थापनमन्त्रः॥ ततो मन्त्रजसवासससाच्छादयेत्। तथाचागमः। सदसनवधवलवत्थेण छाइउं वासपुप्फधूपेणं। अहिवासिज्ज तिन्नि वाराओ सूरिणो सूरिमन्तेण॥१॥ ततश्च पुष्पा-

१ गुरुगुरु इति ग. अधिकम्। २ पसीयउ इत्यन्यत्र। ३ सुमणे इत्यन्यकल्पेषु। ४ सदशनवधवलवस्त्रेण छादयित्वा वासपुष्पधूपेन। अधिवासयेयुः त्रीणि वाराणि सूरयः सूरिमन्त्रेण॥ १॥

सुराधिपतोरणेभ्यः स्वाहा । ॐनम उदुम्बरात्मकेभ्यः धर्मराजतोरणेभ्यः स्वाहा । ॐनम अश्वत्थात्मकेभ्यः सुराधिपतोरणेभ्यः[1] स्वाहा । ॐनमः प्लक्षात्मकेभ्यः यक्षाधिपतोरणेभ्यः स्वाहा ॥ इति तोरणपूजामन्त्राः ॥ ॐनमः पूर्वद्वारव्यवस्थितेभ्यो धर्मध्वजेभ्यः स्वाहा । ॐनमो दक्षिणद्वारव्यवस्थितेभ्यो मानध्वजेभ्यः स्वाहा । ॐनमः पश्चिमद्वारव्यवस्थितेभ्यो गजध्वजेभ्यः स्वाहा । ॐनमः उत्तरद्वारव्यवस्थितेभ्यः सिंहध्वजेभ्यः स्वाहा ॥ इति ध्वजानां पूजामन्त्राः ॥ ॐनमः पीतद्युतिवज्रलाञ्छितकठिनात्मने पृथिवीमण्डलाय स्वाहा । ॐनमः कृष्णद्युतिषड्बिन्दुलाञ्छितवृत्तात्मने वायुमण्डलाय स्वाहा ॥ इति मण्डलपूजामन्त्रः ॥ एवमुक्तानुक्तमपि प्रणवादिस्वाहान्तैः स्वस्वनामभिः पूज्यम् ॥ इति नन्दावर्तपूजा ॥ ॥ ततो धूपमुत्क्षिप्य नानाकन्दमूलफलपक्वान्नहव्यो बलिः प्रदेयः । सदशेन सितवाससा नूतनेन पट्टमाच्छाद्य पुष्पाक्षतचन्दनादिना वस्त्रोपरि सम्पूज्य स्थिरप्रतिमां तत्कर्णिकायां परिकल्प्य चलप्रतिमां तत्रैव स्थापयेदिति । ततः पुष्पाक्षतचन्दनवासयवालिकाकङ्कणसदशवस्त्रोपरि[2] सम्पूज्य मदनफलानि सौभाग्यमन्त्रेणाधिवासनामन्त्रेण वा मुद्राभिश्चाभिमन्त्र्य प्रतिमासमीपं गत्वा चन्दनेन प्रतिमां सर्वाङ्गां विलेपयेत् । ततः पुष्पाण्यारोप्य वासक्षेपं कृत्वा तदनु कपाटजिनचक्रमुद्राभ्यां शक्तिं तेजस्विनीं कृत्वा पञ्चस्वष्टसु चाङ्गेष्वाचार्यमन्त्रेण द्वितीयेन मन्त्रन्यासं विधाय पश्चात्सौभाग्यमुद्रया सौभाग्यमन्त्रं न्यसेत् । तत्राङ्गानि शिरउभयांसकुक्षिद्वयपर्यवसानानि पञ्च तथा शिरोहृदयनाभिपृष्ठिबाहुद्वयोरुयुगलसंज्ञकान्यष्टा-

१ सलिलाधिप इति पाठः । २ वस्त्रमदन इति क. पाठः ।

गिति । ॐनमो भगवओ उसभसामिस्स पढमतित्थयरस्स सिज्झउमे भगवई महाविज्जा जेण सव्वेण इंदेण मघदेयमसमुद्दयेण मेरुम्मि सव्वोसहीहिं सव्वे जिणा अहिसित्ता तेण सव्वेण अहिवासयामि सुव्वयं दढव्वयं सिद्धं सुद्धं सम्मं दंसणमणुपत्तं हिरि हिरि सिरि सिरि मिरि मिरि गुरु गुरु अमले अमले विमले विमले सुविमले सुविमले मोक्खमग्गमणुपत्ते स्वाहा । अहवा ॐनमो खीरासवलद्धीणं ॐनमो महुआसवलद्धीणं ॐनमो संभिण्णसोइणं ॐनमो पयाणुसारीणं ॐनमो कुट्ठबुद्धीणं जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ[1]ॐकंक्षः स्वाहा ॥ अधिवासने विधे ॥ ॐनमो वग्गु २ निवग्गु २ सुमिणे[2] सोमणसे महु महुरे जयंते अपराजिए स्वाहा ॥ सौभाग्यविद्या ॥ अनन्तरमाचार्यः सौभाग्यमन्त्रेण सप्तवारान् परिजप्य कङ्कणं मदनफलं यवमालिकां च निबन्धयेत् ॥ तदनु क्ष्मातेजोवाय्वाकाशपादपाणिपायुउपस्थवाक्घ्राणजिह्वाचक्षुस्त्वक्श्रोत्रमनःप्रभृतीनि तत्त्वानि संस्थाप्य अनन्तरमारोग्यकान्तिसौरभ्यप्रस्वेदरहितत्वमसृक्मांसयोः शुभ्रत्वं आहारनीहारयोरदृश्यत्वं निःश्वाससुगन्धत्वेति सहजगुणकदम्बकं विन्यसेत् । ॐनमो विश्वरूपाय अर्हते केवलज्ञानदर्शनधराय हूं ह्रौं सः सहजगुणान् जिनेशे स्थापयामि स्वाहा ॥ सहजगुणस्थापनमन्त्रः ॥ ततो मन्त्रजसवाससाच्छादयेत् । तथाचागमः । सदसनवधवलवत्थेण छाइउं वासपुप्फधूपेणं । अहिवासिज्ज तिन्नि वाराओ सूरिणो सूरिमन्तेण ॥ १॥ ततश्च पुष्पा-

---

१ कुरुकुरु इति ग. अधिकम् । २ पसीयउ इत्यन्यत्र । ३ सुमणे इत्यन्यकल्पेषु । ४ सदशनवधवलवस्त्रेण छादयित्वा वासपुष्पधूपेन । अधिवासयेत्तु त्रीणि वाराणि सूरयः सूरिमन्त्रेण ॥ १ ॥

क्षतचन्दनादिकमुपरि प्रक्षिप्य रत्नफलमिश्रेण ससधान्येनाभिषिञ्चेत्। ततो नववस्त्राच्छादितायाः प्रतिमायाः चतुर्दिक्षु श्वेतकलशान् यवशरावयवारकान्वितान् स्थापयेत् ॥ तथाचागमः। चत्तारि[1] पुरो कलसा सलिलक्खयकणयरूप्पमणिगब्भा। वरकुसुमदामकण्ठोवसोहिया चन्दणवलित्ता ॥ २ ॥ जववारयसयवत्ताइघट्टिया रयणमालियाकलिया। सुह[3]पुण्ण[2]चत्तचउतंतुगोत्थया होंति पासेसु ॥ ३ ॥ ततो घृतगुडपूर्णान् मङ्गलप्रदीपान प्रज्वालयेत्। तथाचोक्तम्। मंगलदीवा[4] य तहा घयगुलपुण्णा तहेखुरखा[5] य ॥ वरवन्नअक्खयविचित्तसोहिया तह य कायव्वा ॥ ४ ॥ तदनु कन्दमूलफलसम्मिश्रो विचित्रपक्वान्नमनोहरससरावकायुतः—तासां च द्रव्याणि पायसं गुडपिण्डाः कूसरा दध्योदनं सुकुमारिका शाल्योदनं सिद्धपिण्डकाश्चेति मनोहरो बलिर्देयः ॥ उक्तंच। ओस[6]हिफलवत्थसुवण्णरयणसुत्ताइयाइं विविहाइं। अन्नाइंवि गरूयसुदंसणाइं दव्वाइं विमलाइं ॥१॥ चित्तबलिगन्धमल्लविचित्तकुसुमाइं चित्तवासाइं। विविहाइं धन्नाइं सुहाइं रुवाइं उवणेह ॥२॥ ततो यववारकवेदिकादीन्यष्टमङ्गलकानि चतुरिकायां स्थापयेत्। चतुरिकावेद्यौ रक्तसूत्रेण वेष्टयेत्। चतुःकोणेषु रक्षार्थं कुलिशरूपानस्त्राभिम-

---

१ चत्वारः पुरः कलशाः सलिलाक्षतकनकरूप्यमणिगर्भाः। वरकुसुमदामकण्ठोपशोभिताश्चन्दनावलिप्ताः ॥२॥ यववारकशतपत्रादिघट्टिता रत्नमालिकाकलिताः। मुखपूर्णचत्रचतुस्तन्तुकावस्तुता भवन्ति पार्श्वेषु ॥ ३ ॥ २ पुण्ण इति पाठान्तरम्। ३ सुह इति पाठान्तरम्। ४ मङ्गलदीपाश्च तथा घृतगुडपूर्णास्तथेक्षुरकाश्च। वरवर्णाक्षतविचित्रशोभितास्तथा च कर्तव्याः॥४॥ ५ तहेखुरुखा इति पाठान्तरम्। ६ ओषधिफलवस्त्रसुवर्णरत्नसूत्रादिकानि विविधानि। अन्यान्यपि गुरुकसुदर्शनानि द्रव्याणि विमलानि ॥ १ ॥ चित्रबलिगन्धमाल्यविचित्रकुसुमानि चित्रवासासि। विविधानि धन्यानि शुभानि रूपाणि उपनयत ॥२॥

श्रितान् कणशान् निवेशयेत् । तदनु रूपयौवनलावण्यवत्यो रचितोदारवेषा अविधवाः सुकुमारिकाः गुडपिण्ड-
पिहितमुखान् चतुरः कुम्भान् कोणेषु संस्थाप्य कांस्यपात्रीविनिहितदूर्वादध्यक्षततंकुकाद्युपकरणसमन्विताः
सुवर्णादिदानपुरस्सरमष्टौ चतस्रो वा नार्यो रक्तसूत्रेण स्पृशेयुः । शेषाश्च मङ्गलानि दद्युः ॥ तथाचागमः ।
गउं नारीओमिणणं नियमा अहियासु नत्थि उ विरोहो। नेवत्थं व इमासिं जं पवरं तं इहं सेयं॥१॥ दिक्खिय जिण-
ओमिणणा दाणाउ ससत्तिओ तहेयंमि । वेहव्वं दालिद्दं न होइ कइयावि नारीणं ॥२॥ तासां च लवणगुडादि
कृत्वा लवणारात्रिकमुत्तारयेत् । तथाचोक्तम् । आरत्तियमवयारणमङ्गलदीवं च निम्मिउं पच्छा । चउनारीहिं
निम्मच्छणं च विहिणा उ कायव्वं ॥३॥ ततो वर्धमानस्तुतिभिः संघसहिताश्चैत्यवन्दनमधिवासनादिदेवतानां
कायोत्सर्गाणि कुर्यात् । उक्तं च। वंदितु चेइयाइं उस्सग्गो तह य होइ कायव्वो । आराहणानिमित्तं पवयणदे-
वीए संघेण ॥ ४ ॥ विश्वाशेषसु वस्तुषु मन्त्रैर्याजस्रमधिवसति वसतौ। सास्यामवतरतु श्रीजिनतनुमधिवासनादेवी
॥५॥ प्रोत्फुल्लकमलहस्ता जिनेन्द्रवरभवनसंस्थिता देवी। कुन्देन्दुशङ्खवर्णा देवी अधिवासना जयति ॥६॥ एवमनेन

१ पात्रनिनिहित इति क. पाठः । २ कुङ्कुमाद्युप इति क. ख. पाठः । ३ चतुर्नार्यवमानं नियमात् अधिकासु नास्ति तु विरोधः ।
नेपथ्यं च आसां यत् प्रवरं तत् इह श्रेयः ॥ १ ॥ दीक्षितजिनानां अवमानात् दानात् स्वशक्तितः तथा अस्मिन् । वैधव्यं दारिद्र्यं
न भवति कदापि नारीणाम् ॥ २ ॥ ४ आरात्रिकावतारणं मङ्गलदीपं च निर्माय पश्चात् । चतुर्नारीभिर्निर्मञ्छणं विधिना तु कर्तव्यम् ॥३॥
५ वन्दित्वा चैत्यानि उत्सर्गस्तथा च भवति कर्तव्यः । आराधनानिमित्तं प्रवचनदेव्याः सङ्घेन ॥ ४ ॥

विधिना श्रीमद्भगवन्तमधिवास्य गन्धधूपपुष्पाद्यधिवासितायां स्वास्तीर्णायां विद्रुमशय्यायां शाययेत्। [1]वर्मजसाऽरक्तवाससा चाच्छादयेत्। तदनु ससगीतवाद्यमङ्गलादिना चतुर्विधश्रमणसङ्घेन सह। ततः प्रभातायां शर्वर्यामुदये प्राप्ते वासरे सूरिः प्रतिष्ठां कुर्यात्॥ उक्तं च॥ [2]इय विहिणा अहिवासेज्ज देवबिम्बं निसाए सुद्धमणो। तो उग्गयम्मि सूरे होइ पइट्ठासमारम्भो॥ १॥ इति अधिवासनाविधिः॥ ततः काञ्चित् कालकलां विलम्ब्य पूर्ववच्छान्तिबलिं प्रक्षिप्य चैत्यवन्दनादिकं कर्म कृत्वा वस्त्रमपनीयाऽविधवनायिकायाः समर्पयेत्। ततो रजतमयवर्तिकानिहितमधुदिव्यया सुवर्णशलाकया अर्हन्मन्त्रमुच्चार्य ज्ञानचक्षुरुन्मीलयेत्॥ तथा चागमः॥ [3]कल्लाणसलायाए महुघयपुण्णाए अच्छि [4]उग्घाडे। अण्णेण वा हिरण्णेण निययजहसत्तिविहवेण॥२॥ दृष्टिन्यासे च दृष्टेराप्यायननिमित्तं घृतादर्शदधीनि संदर्शयेत्। तदनु योजनेऽपि कोटिसहस्रावस्थानं वचनस्य स्वस्वभाषया परिणमनं रुग्वैरमारिदुर्भिक्षडमरादीनामभावः। अतिवृष्ट्यनावृष्टी न भवतः। इति कर्मक्षयोत्पन्नगुणान् जिनेन्द्राणां स्थापयेत्। ॐनमो भगवते अर्हते घातिक्षयकारिणे घातिक्षयोत्पन्नगुणान् जिने संस्थापयामि स्वाहा। घातिकर्मक्षयोत्पन्नैकादशातिशयस्थापनामन्त्रः॥ पश्चादाचार्यः स्वमन्त्रोच्चारपुरस्सरं प्रासादं गत्वा विघ्नानुत्साद्य रत्नादिपञ्चकं विन्यसेत्। तत्र पूर्वस्यां वज्रं, आग्नेय्यां सूर्यकान्तं, दक्षिणस्यां नीलं, नैर्ऋत्यां महानीलं,

१ धर्म इति स्यात्। २ इति विधिना अधिवासयेत् देवबिम्बं निशायां शुद्धमनाः। तत उद्गते सूर्ये भवति प्रतिष्ठासमारम्भः॥ १॥ ३ कल्याणशलाकया मधुघृतपूर्णया अक्षी उद्घाटयेत्। अन्येन वा हिरण्येन नियतयथाशक्तिविभवेन॥ २॥ ४ उघारे इति ग. पाठः।

पश्चिमस्यां मौक्तिकं, वायव्यां पुष्परागं, उत्तरस्यां पद्मरागं, ईशान्यां वैडूर्यमिति पूर्वादिगर्तासु विन्यस्य। मध्य-गर्तायां समस्तानीति। ततो हेमताम्रकृष्णलोहत्रपुरौप्यरीतिकाकांस्यसीसकाद्यपि पूर्वादिगर्तासु मध्ये सम-ग्राणि हेमशक्तिमनुस्मरन् न्यस्येत्। तदनु हरितालीं मनःशिलां तौरिकां सुवर्णमाक्षिकां पारदं हैमगैरिकं गन्धकां अभ्रकामिति धातून् स्मृतिबीजात्मकान् पूर्वादिगर्तासु। मध्ये समस्तानि। अथोशीरविष्णुक्रान्तारक्त-चन्दनकृष्णागुरुश्रीखण्डं उत्पलसारिकं कुष्टं शङ्खपुष्पिकाद्यौषधीरारोग्यशक्तिमनुसंधाय यथासंख्यं पूर्वादिग-र्तासु मध्यगर्तायामखिलाङ्यसेदिति ॥ यद्वा सर्वरत्नाभावे वज्रं लोहानां सुवर्णं धातूनां हरितालं औषधीनां सहदेवी बीजानां यवाः एकं वा पारदं सर्वगर्तासु विन्यस्य। मध्यमगर्तायां सिंहासनपाण्डुकम्बलशिलालङ्कृतं हेममयं ताम्रमयं मृन्मयं मेरुं स्थापयेदिति। स्थिरप्रतिष्ठायामयं विधिरितरायां रत्नगर्भाकुलालचक्रमृत्तिकां दर्भांश्च स्थापयेदिति। ततो घर्मजसवाससा प्रच्छाद्य लोकपालानां बलिं दत्वा जयशब्दादिमङ्गलैः सतूर्यनि-र्घोषै रत्नकरम्बकं संक्षिप्य अधिवासनामण्डपात् भगवन्तं भद्रपीठे समुत्तार्य स्थिरो भवेत्युक्त्वा छादिकाभिः सूत्रान्तरेण प्रगुणं विधाय लग्नकालमवलोकयेत्। अनन्तरमाचार्यो मध्यमया चन्दनं अङ्गुष्ठतर्जनीभ्यां वासान् मुष्टौ पुष्पाक्षतान् संगृह्य स्वमंत्रेण कुम्भकविधिना सृष्टिमार्गमनुस्मरन् सूत्रधारोपनीतछदिकं प्राणेन सह प्रतिष्ठाप्य। ॐ अर्हं इति मन्त्रेणोत्तमाङ्गादिषु वासादिक्षेपं कुर्यात्। तत आचार्यमन्त्रेण। ॐ नमो अरिहंताणं।

---

१ समन्त्रेण इति ग. पाठः। २ मनुसरन् इति क. पाठः।

ॐनमो सिद्धाणं। ॐनमो आयरियाणं। ॐनमो उवज्झायाणं। ॐनमो लोएसव्वसाहूणं। ॐनमो ओहिजिणाणं। ॐनमो परमोहिजिणाणं। ॐनमो सव्वोहिजिणाणं। ॐनमो अणन्तोहि जिणाणं। ॐनमो केवलिजिणाणं। ॐनमो भवत्थ[1]केवलिजिणाणं। ॐनमो भगवओ अरहओ महई महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई (इमा) महई महाविज्जा वीरे २ महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जये विजये जयन्ते अपराजिए अणिहए माचल २ वृद्धिंदे[2] २ हूं २ ह्रीं २ सँः[3] २ ओहिणिं[4] मोहिणि स्वाहेत्यादिना प्रतिष्ठामन्त्रेणाचार्यमन्त्रेण वा चक्रमुद्रया प्रतिमायां त्रिपञ्चसप्तवारान् मन्त्रन्यासं विधाय ॐ ह्रीं अर्हन्मूर्तये नमः इति पुनः प्रवचनमुद्रया मूर्तिं प्रतिबोध्य स्थावरे तिष्ठ २ स्वाहा इति जिनमुद्रया स्थिरीकरणं कृत्वा आचार्यः धेनुमुद्रयाऽमृतीकृत्याऽङ्गमन्त्रेण गरुडमुद्रया दुःखविघ्नादीनुत्साद्य सौभाग्यमन्त्रेण योनिमुद्रया सौभाग्यमारोप्य ऋषभाद्येकतमं जिने नाम कृत्वा गन्धपुष्पधूपादिभिः सम्पूज्य नमस्कारमुद्रया नमस्कृतिं विदध्यात् ॥ तदनु कनककमलपातश्चतुरङ्गताकण्टकानामधोमुखीभावो रोमनखानामवस्थितत्वमिन्द्रियार्थानुकूलता सर्वर्तूनां प्रादुर्भावो गन्धोदकवृष्टिः शकुनानां प्रदक्षिणगतयो द्रुमाणामवनतिः प्रभञ्जनानुकूलता भवनपतिप्रभृतीनां जघन्येन कोटिमात्रावस्थानमित्येवं सुरकृतातिशयप्रातिहार्ययक्षयक्षेश्वरीधर्मचक्रमृगध्वजेन्द्ररत्नध्वजप्राकारत्रयादीन् प्रत्येकं स्वस्वमन्त्रैः संस्थापयेत् ॥ तत्रातिशयादीनां स्थापनमन्त्राः। ॐनमो भगवते अर्हते सुरकृतातिशयान् जिनस्य शरीरे

१ सव्वत्थ इति पाठान्तरम्। २ वुद्धिदे इति ग. पाठः। ३ सा २ इति पाठान्तरम्। ४ अरिणि इत्यन्यकल्पेषु दृश्यते।

स्थापयामि स्वाहा। ॐनमो भगवते अर्हते असिआउसा जिनस्य प्रातिहार्याष्टकं स्थापयामि स्वाहा। ॐयक्षेश्वराय स्वाहा। ॐ ह्रीं हूं ह्रीं शासनदेव्यै स्वाहा। ॐधर्मचक्राय स्वाहा। ॐमृगद्वन्द्वाय स्वाहा। ॐरत्नध्वजाय स्वाहा। ॐनमो भगवते अर्हते जिनप्राकारादित्रयं स्थापयामि स्वाहा॥ इति अतिशयादीनां स्थापनामन्त्राः॥ ततोऽविधवानारीभिः प्राग्वत् स्पर्शनादिकं कर्म कृत्वा लवणारात्रिकमुत्तार्य चतुर्विधश्रमणसङ्घसहितो देववन्दनं प्रतिष्ठादिदेवतानां कायोत्सर्गाणि कुर्यात्॥ तथा चागमः॥ तो चेइयाइं विहिणा वन्दिज्जा सयलसङ्घसंजुत्तो। परिवट्टमाणभावो जिणदेवे दिन्नदिट्ठीओ॥ १॥ ततोचिय पवयणदेवयाए पुणरवि करेज्ज उस्सग्गो। आराहणथिरकरणट्ठयाए परमाए भत्तीए॥ २॥ यदधिष्ठिताः प्रतिष्ठाः सर्वाः सर्वास्पदेषु नन्दन्ति। श्रीजिनबिम्बं सा विशतु देवता सुप्रतिष्ठमिदम्॥ ३॥ जइ सग्गे पायाले अहवा खीरोदहिम्मि कमलवणे। भयवइ करेहि संत्ति सन्निज्झं सयलसङ्घस्स॥४॥ अट्ठविहकम्मरहियं जा वन्देइ जिणवरं पयत्तेण। सङ्घस्स हरउ दुरियं सिद्धा सिद्धाइया देवी॥ ५॥ ततोऽञ्जलिमुद्रया सिद्धादिमङ्गलोद्घोषणपूर्वकमुत्तरोत्तरपूजाभिवृद्धये सङ्घेन सह

---

१ श्रुं इत्यन्यत्र। २ वत्सायेति पाठान्तरम्। ३ ततश्चैत्यानि विधिना वन्देत सकलसङ्घसंयुक्तः। परिवर्धमानभावो जिनदेवे दत्तदृष्टिकः॥ १॥ ततश्चैव प्रवचनदेवतायाः पुनरपि कुर्यादुत्सर्गः। आराधनस्थिरीकरणार्थकया परमया भक्त्या॥ २॥ यदि स्वर्गे पाताले अथवा क्षीरोदधौ कमलवने। भगवती करोति शान्तिं सान्निध्यं सकलसङ्घस्य॥ ४॥ अष्टविधकर्मरहितं या वन्दते जिनवरं प्रयत्नेन। सङ्घस्य हरतु दुरितं सिद्धा सिद्धायिका देवी॥ ५॥ ४ मङ्गलाघोषण इति पाठः।

पुष्पगन्धादिमिश्रस्य ससधान्यकस्य प्रक्षेपं कुर्यात् । उक्तं च । [1]वन्दितुं चेइयाइं इमाइं तो सरभसं पढेज्जा । सुमङ्गलसाराइं तहा थिरत्तसारेण सिद्धाइं ॥१॥ तद्यथा । जह सिद्धाण पइट्ठा तिलोयचूडामणिम्मि सिद्धिपए । आचन्दसूरियं तह होइ इमा सुप्पइट्ठत्ति ॥ २॥ गेविज्जगकप्पाणं सुपइट्ठा वण्णिया जहा समए । आचन्दसूरियं तह होइ इमा सुप्पइट्ठत्ति ॥ ३ ॥ जह मेरुस्स पइट्ठा[2] असेससेलाणमज्झयारम्मि । आचन्दसूरियं तह होइ इमा सुप्पइट्ठत्ति ॥ ४ ॥ कुलपव्वयाणवक्खारवट्टवेयड्ढदीहियाणं च । कूडाण जमगकंचणवित्तविचित्ताइयाणं च ॥ ५ ॥ अञ्जणगरुयगकुण्डलमाणुसइसुयारमाइयाणं च । सेलाण जह पइट्ठा तह एसा होइ सुपइट्ठा ॥ ६ ॥ जह लवणस्स पइट्ठा असेसजलहीण मज्झयारम्मि । आचन्दसूरियं तह होइ इमा सुप्पइट्ठत्ति ॥ ७ ॥ कुण्डा-

---

१ वन्दित्वा चैत्यानि इमानि ततः सरभसं पठेत् । सुमङ्गलसाराणि तथा स्थिरत्वसारेण सिद्धानि ॥ १ ॥ यथा. सिद्धानां प्रतिष्ठा त्रिलोकचूडामणौ सिद्धिपदे । आचन्द्रसूर्यं तथा भवति इमा सुप्रतिष्ठा इति ॥ २ ॥ ग्रैवेयककल्पानां सुप्रतिष्ठा वर्णिता यथा समये । आचन्द्रसूर्यं तथा भवति इमा सुप्रतिष्ठा इति ॥ ३ ॥ यथा मेरोः प्रतिष्ठा अशेषशैलानां मध्ये ( मध्यकारे ) । आचन्द्रसूर्यं तथा भवति इमा सुप्रतिष्ठा इति ॥ ४ ॥ कुलपर्वतानां वक्षस्कारवृत्तवैताढ्यदीर्घिकाणां च । कूटानां यमलकांचनवित्तविचित्रादिकानां च ॥ ५ ॥ अञ्जन-रुचककुण्डलमानुषोत्तरइषुकारआदिकानाम् । शैलानां यथा प्रतिष्ठा तथा एषा भवति सुप्रतिष्ठा ॥६॥ यथा लवणस्य प्रतिष्ठा अशेषजलधीनां मध्ये ( मध्यकारे ) । आचन्द्रसूर्यं तथा भवति इमा सुप्रतिष्ठा इति ॥ ७ ॥ कुण्डानां द्रहाणां तथा महानदीनां च यथा सुप्रतिष्ठा ।

२ पइट्ठो इति क. पाठः ।

आकालमीतहेसा वि होउ निच्चन्तु सुपइट्टा ॥८॥ जम्बुद्दीवाईणं दी-
व दहाणं तह महानईणं य जह य सुपइट्टा । आकालगीतहेसा वि होउ निच्चन्तु सुपइट्टा ॥८॥ जम्बुद्दीवाईणं दी-
वसमुद्दाणं सव्वकालंमि । जह एयाण पइट्ठा सुपइट्ठा होउ तह एसा ॥ ९ ॥ धम्माधम्मागासत्थिकायमइयस्स
सव्वलोयस्स । जह सासया पइट्ठा एसावि तहेव सुपइट्ठा ॥ १० ॥ पञ्चण्हवि सुपइट्ठा परमेट्ठीणं जहा सुए
भणिया । नियया अणाइणिहणा तह एसा होउ सुपइट्ठा ॥ ११ ॥ तह पवयणस्स गमभंगहेउनयनीइकालकलि-
यस्स । जह एयस्स पइट्ठा निच्चा तह होउ एसावि ॥ १२ ॥ तह संघनराहिवजणवयाण रज्जस्स तहय ठाणस्स ।
गोट्ठीए सव्वकालंपि सासया होउ सुपइट्ठा ॥ १३ ॥ इय एसा सुपइट्ठा गुरुदेवजईहिं तह य भविएहिं । निउणं
पुट्ठा सद्धेण चेव कप्पट्ठिआ होइ ॥ १४ ॥ सोउं मङ्गलसद्दं सउणं ति जहेव इट्ठ सिद्धित्ति । एत्थंपि तहा सम्मं

आकालमीतहेसापि भवतु नित्यं तु सुप्रतिष्ठा ॥ ८ ॥ जम्बुद्वीपादीनां द्वीपसमुद्राणां सर्वकाले । यथा एषां प्रतिष्ठा सुप्रतिष्ठा भवतु तथा
एषा ॥ ९ ॥ धर्माधर्माकाशास्तिकायमयस्यास्य सर्वलोकस्य । यथा शाश्वता प्रतिष्ठा एषापि तथैव सुप्रतिष्ठा ॥ १० ॥ पञ्चानामपि सुप्रतिष्ठा
परमेष्ठीनां यथा श्रुते भणिता । नियता अनादिनिधना तथा एषा भवतु सुप्रतिष्ठा ॥ ११ ॥ तथा प्रवचनस्य गमभङ्गहेतुनयनीतिकालक-
लितस्य । यथा एतस्य प्रतिष्ठा नित्या तथा भवतु एषापि ॥ १२ ॥ तथा सङ्घनराधिपजनपदानां राज्यस्य तथैव स्थानस्य । गोष्ठ्याः
सर्वकालमपि शाश्वता भवतु सुप्रतिष्ठा ॥ १३ ॥ इति एषा सुप्रतिष्ठा गुरुदेवयतिभिः तथाच भविकैः । निपुणं पृष्टा सद्धेन चैव कल्पस्थिता
भवति ॥ १४ ॥ श्रुत्वा मङ्गलशब्दं शकुनं इति यथैव इष्टं सिध्यति । अत्रापि तथा सम्मं ज्ञातव्यं बुद्धिमद्भिः ॥ १५ ॥

१ नगद्दरिसाणाणं उड्ढलोयंमि जहय सुपइट्ठा । आचन्दसूरियं तह होइ इमा सुपइट्ठत्ति इत्यधिकम् । २ सउणि इति पाठान्तरम् ।
३ सिद्धित्ति इति श्रीहरिभद्रकृताष्टकपञ्चाशके ।

नायव्वं वुद्धिमन्तेहिं ॥ १५ ॥ राया बलेण वट्टइ जसेण धवलेइ सयलदिसिभाए। पुण्णं वड्ढइ विउलं सुपइट्ठा जस्स देसंमि ॥ १६ ॥ उवहणइ रोगमारी दुब्भिक्खं हणइ कुणइ सुहभावे। भावेण कीरमाणा सुपइट्ठा सयललोयस्स ॥ १७ ॥ जिणबिंबपइट्ठं जे करिंति तह कारविंति भत्तीए। अणुमण्णन्ति पइदिणं सव्वे सुहभाइणो होंति ॥ १८ ॥ दव्वं तमेव भणइ जिणबिम्बपइट्ठणंमि धण्णाणं। जं लग्गइ तं सयलं दोग्गइजणणं हवइ सेसं ॥ १९ ॥ एवं नाऊण सया जिणवरबिम्बस्स कुणह सुपइट्ठं। पावेह जेण जरमरणवंज्जियं सासयं ठाणं ॥ २० ॥ ततो मुखोद्घाटनकं कृत्वा शान्त्यर्थं शान्तिबलिं क्षिपेत्। ॐनमो भगवते अर्हते शान्तिनाथस्वामिने सकलकलातिशेषमहासम्पत्समन्विताय त्रैलोक्यपूजिताय नमोनमः शान्तिदेवाय सर्वामरसुसमुहस्वामिसम्पूजिताय भुवनपालनोद्यताय सर्वदुरितविनाशनाय सर्वाशिवप्रशमनाय सर्वदुष्टग्रहभूतपिशाचमारिशाकिनीप्रमथनाय नमो भगवति जये विजये अजिते अपराजिते जयन्ति जयावहे सर्वसङ्घस्य भद्रकल्याणमङ्गलप्रदे

---

राजा वलेन वर्धते यशसा धवलयति सकलदिशिभागे। पुण्यं वर्धते विपुलं सुप्रतिष्ठा यस्य देशे ॥ १६ ॥ उपहन्ति रोगमारी दुर्भिक्षं हन्ति करोति सुखभावे। भावेन क्रियमाणा सुप्रतिष्ठा सकललोकस्य ॥ १७ ॥ जिनविम्बं प्रतिष्ठितं ये कुर्वन्ति कारयन्ति भक्त्या। अनुमन्यन्ते प्रतिदिनं सर्वे सुखभागिनो भवन्ति ॥ १८ ॥ द्रव्यं तदेव भणति जिनबिम्बप्रतिष्ठाने धन्यानाम्। यद् लगति तत् सकलं दुर्गतिजनकं भवति शेषम् ॥ १९ ॥ एवं ज्ञात्वा सदा जिनवरबिम्बस्य कुरुत सुप्रतिष्ठाम्। प्राप्नुथ येन जरामरणवर्जितं शाश्वतं स्थानम् ॥ २० ॥

१ वंधियमिति पाठान्तरम्।

साधूनां श्रीशान्तितुष्टिपुष्टिदे स्वस्तिदे भव्यानां सिद्धिवृद्धिनिर्वृत्तिनिर्वाणजनने सत्वानामभयप्रदानरते भक्तानां शुभावहे सम्यग्दृष्टीनां धृतिरतिमतिबुद्धिप्रदानोद्यते जिनशासनरतानां श्रीसम्पत्कीर्तियशोवर्धनि रोगजलज्वलनविषविषधरदुष्टज्वरव्यन्तरराक्षसरिपुमारिचौरईतिश्वापदोपसर्गादिभयेभ्यो रक्ष २ शिवं कुरु २ शान्तिं कुरु २ तुष्टिं कुरु २ पुष्टिं कुरु २ ॐनमो नमः हूं हः क्षः ह्रीं फट् २ स्वाहा ॥ शान्तिबलिमन्त्रः ॥ तदनु सङ्घादिपूजा दीनानाथादिदानं बन्धमोक्ष इति प्रवचनोद्भासनानिमित्तमवश्यं कर्तव्यमिति ॥ उक्तंच ॥ सत्तीए सङ्घपूया विसेसपूया य बहुगुणा एसा । जं एस सुए भणिओ तित्थयराणंतरो सङ्घो ॥ १ ॥ गुणसमुदओ य सङ्घो पवयण तित्थन्ति होइ एगट्ठा । तित्थयरोवि य एयं नमए गुरुभावओ चेव ॥ २ ॥ तप्पुव्विया अरहया पूइयपूया य विणयकम्मं य । कयकिच्चो(किच्चो)वि जह कहं कहेइ नमए तहा तित्थं ॥ ३ ॥ एयंमि पूइयंमि नत्थि तयं जं न पूइयं होइ । भुवणेवि पूयणिज्जं न पुणट्ठाणं जओ अन्नं ॥ ४ ॥ तप्पूयापरिणामो हंदि महाविसयमो मुणे-

१ शक्त्या सङ्घपूजा विशेषपूजा च बहुगुणा एषा । यत् एषः श्रुते भणितः तीर्थकरानन्तरः सङ्घः ॥ १ ॥ गुणसमुदयश्च सङ्घः प्रवचनं तीर्थमिति भवन्ति एकार्थाः । तीर्थंकरोपि च एनं नमति गुरुभावतश्चैव ॥ २ ॥ तत्पूर्विका अर्हत्ता पूजितपूजा च विनयकर्म च । कृतकृत्यो ( कृतकृत्यो ) पि यथा कथं कथयति नमति तथा तीर्थम् ॥ ३ ॥ एतस्मिन् पूजिते नास्ति ( तकत् ) तत् यत् न पूजितं भवति । भुवनेपि पूजनीयं न पुनः स्थानं यतः अन्यत् ॥ ४ ॥ तत्पूजापरिणामो हन्त महाविषयो मन्तव्यः । तद्देशपूजनेपि देवतापूजादि

१ गुरुभाव इति क. पाठः । २ गुणठाणं इति पञ्चाशके ।

यव्वो । तद्देसपूयणम्मि वि देवयपूयाइ नाएण ॥ ५ ॥ आसन्नसिद्धियाणं लिंगमिणं जिणवरेहिं पन्नत्तं । सङ्घंमि चेव पूया सामन्नेणं गुणनिहिम्मि ॥ ६ ॥ एसा य महादाणं एसच्चिय होइ भावजन्नत्ति । एसो गिहत्थसारो एसच्चिय सम्पयामूलम् ॥ ७ ॥ एईए फलं एयं परमं निव्वाणमेव नियमेण । सुरनरसुहाइं अणुसंगियाइं इह किसिपलालं व ॥ ८ ॥ कयमत्थपसंगेणं उत्तरकालोइयं इयह्निम्पि । अणुरूपं कायव्वं तित्थुन्नइकारगं नियमा ॥ ९ ॥ जइओ जणोवयारो विसेसओ णवरसयणवग्गम्मि । साहम्मियवग्गम्मि य एयं खलु परमवच्छल्लम् ॥ १० ॥ तदनन्तरमष्टाहिका देशकालकार्यवशात्त्र्यहिका वा नियमतः कर्तव्येति ॥ तथाचोक्तम् ॥ अट्ठाहिया य महिमा सम्मं अणुबन्धसाहिया केइ । अहवा तिन्नि य दियहे निओगओ चेव कायव्वा ॥ ११ ॥ तदनु तथाविधकार्यवशात्

---

ज्ञातेन ॥ ५ ॥ आसन्नसिद्धिकानां लिङ्गमिदं जिनवरैः प्रज्ञप्तम् । सङ्घे चैव पूजा सामान्येन गुणनिधौ ॥ ६ ॥ एषा च महादानं एषा चैव भवति भावयज्ञ इति । एष गृहस्थसारः एषापि च सम्पदामूलम् ॥ ७ ॥ अस्याः फलं एतत् परमं निर्वाणमेव नियमेन । सुरनरसुखानि आनुषङ्गिकाणि इह कृषिपलालमिव ॥ ८ ॥ कृतमर्थप्रसङ्गेण उत्तरकालोदितं इदानीमपि । अनुरूपं कर्तव्यं तीर्थोन्नतिकारकं नियमात् ॥ ९ ॥ जनितो जनोपकारः विशेषतः नवरं स्वजनवर्गे । साधर्मिकवर्गे च एतत् खलु परमवात्सल्यम् ॥ १० ॥

१ कारणं इति ग. पाठः । २ अष्टाहिका च महिमा सम्यग् अनुबन्धसाधिका केचित् । अथवा त्रीन् च दिवसान् नियोगतश्चैव कर्तव्या ॥ ११ ॥

प्रथमदिने तृतीयदिने वा विशेषपूजां विधाय लोकपालान् सम्पूज्य सुवासिनीमङ्गलपूर्वकं । ॐ ह्रूं क्ष्रूं क्ष्वीं सः इत्यनेन मन्त्रेण प्रतिसरोन्मोचनकं कृत्वा नन्द्यावर्तसंनिधौ गत्वा विसर्जनार्थमर्घं दत्वा भोगाङ्गानि पूर्वोक्तन्यायेन संहृत्य देवे संयोज्य संहारमुद्रया स्वस्थानं गच्छ गच्छ इत्यनेन मन्त्रेण पूजां द्वादशान्तमानीय शिरस्यारोप्य पूरकेण सापेक्षं क्षमस्वेति हृत्कमले विसर्जयेत् ॥ उक्तंच । अट्ठाहियावसाणे पडिससरोमुयणमेव कायव्वं । भूयबलिदीणदाणं एत्थंपि ससत्तिओ कुज्जा ॥ १ ॥ ततो घृतदुग्धदध्यादिभिः स्नानं विधाय अष्टोत्तरशतेन घटकाणां स्नापयेत् । ततो मासं प्रति द्वादश स्नपनानि कृत्वा पूर्णे संवत्सरे अष्टाह्निकापूर्विकां विशेषपूजां विधाय दीर्घायुर्ग्रन्थिं निबन्धयेदित्येवमुत्तरोत्तरं विशेषपूजादिकं निःश्रेयसार्थिना सर्वदैवावहितेन कर्तव्यमिति । इय सत्तिविहवसत्ताणुसारओ वण्णिया पइट्ठाउ । विहवाभावासत्तीए असठभावो इयं कुज्जा ॥ १ ॥ पुहइमयं पिहु अङ्गुट्ठमेत्तयं तणकुडाए विसुओ य । सुइभूओ जिणबिंबं ठविज्ज इमिणा विहाणेण ॥ २ ॥ संसारविरागमणो गरहानिंदाजुगुच्छियप्पाणो । काऊण भावमंगल पंचनमुक्काररूवं तु ॥ ३ ॥

१ पुं अन्यत्रपुस्तके । २ अष्टाह्निकावसाने प्रतिसरोन्मोचनमेव कर्तव्यं भूतबलिदीनदानं अत्रापि स्वशक्तितः कुर्यात् ॥ ३ देवदाणमित्यन्यत्रपुस्तके ।
४ इति शक्तिविभवसत्त्वानुसारतो वर्णिता प्रतिष्ठा तु । विभवाभावाशक्त्या अशठभाव इमां कुर्यात् ॥ १ ॥
पृथ्वीमयं पृथु अङ्गुष्ठमात्रकं तृणकुट्यां विश्रुतश्च । शुचिभूतो जिनबिम्बं स्थापयेत् अनेन विधानेन ॥ २ ॥
संसारविरागमना गर्हानिन्दाजुगुप्सितात्मा । कृत्वा भावमङ्गलं पञ्चनमस्काररूपं तु ॥ ३ ॥

कासस्स य कुसुमेहिं पुण्हउ[2] ( सुरहि ) सुरहिकुसुमविरहंमि । कारिज्ज पइट्ठं परमभत्तिबहुमाणसंजुत्तो ॥ ४ ॥ कलसाईणमभावे विरहे तह सेसमङ्गलाणं च । पञ्चनमुक्कारो च्चिय भावोत्तममंगलं नियमा ॥ ५ ॥ पज्जत्तमिणे णियमा मायालोहेहिं विप्पमुक्कस्स । पञ्चनमोक्कारेणं जं कीरइ मंगलाईयं ॥ ६ ॥ सवत्थ भावमङ्गल–पञ्चनमोक्कारपुविया किरिया । कायवा जिणबिंबाण सबभावेण सुपइट्ठा ॥ ७ ॥ मणिकयसुवन्नरीरीपडिमं पाहाणणिम्मिए भुवणे । जो ठवइ भत्तिजुत्तो तस्स दुहं नैव कइयावि ॥ ८ ॥ इय सामन्नपइट्ठा–विहाणमेयं समासओ भणियं । इण्हिं भणिमो लिप्पाइयाण अचलाण पडिमाणं ॥ ९ ॥ ॥ तत्र पूर्ववत् भूतबलिं दत्वा चैत्यवन्दनादिकं कर्म निवर्तयित्वा शुद्धदर्पणमानीय प्रतिमाभिमुखं स्नानमण्डपपीठिकायां प्रतिमावदादर्शप्रतिबिम्बितां शान्ताकृतिमभिषिच्य शेषं पूर्वविधिना निखिलमपि कर्म कर्तव्यमिति । एवमनेन विधिना

---

१ काशस्य च कुसुमैः पुण्यस्तु सुरभि सुरभिकुसुमविरहे । कारयेत् प्रतिष्ठां परमभक्तिबहुमानसंयुक्तः ॥ ४ ॥
कलशादीनामभावे विरहे तथा शेषमङ्गलानां च । पञ्चनमस्कारश्चैव भावोत्तममङ्गलं नियमात् ॥ ५ ॥
पर्याप्तमस्मिन् नियमात् मायालोभैर्विप्रमुक्तस्य । पञ्चनमस्कारेण यत् करोति मङ्गलादिकम् ॥ ६ ॥
सर्वत्र भावमङ्गलपञ्चनमस्कारपूर्विका क्रिया । कर्तव्या जिनबिम्बानां सर्वभावेण सुप्रतिष्ठा ॥ ७ ॥
मणिकट(काष्ट)सुवर्णरीतिप्रतिमां पाषाणनिर्मिते भुवने । यः स्थापयति भक्तियुक्तस्तस्य दुःखं नैव कदापि ॥ ८ ॥
इति सामान्यप्रतिष्ठाविधानमेतत् समासतो भणितम् । इदानीं भणामो लेपादिकानां अचलानां प्रतिमानाम् ॥ ९ ॥
२ पुण्ह ॐ इति पाठान्तरम् । कचित् पुण्ह ॐ सुरहि सुरहि इति पाठो दृश्यते ।

यथागत् विज्ञागाभ्यस्य चाभिमानादिरहितेनार्येण प्रतिष्ठादिकं कर्तव्यमन्यथाकरणे भवपातः । तथाचोक्तम् । अंगियाणी उणियविहिं जिणबिंबं जो ठवेइ मूढमणो । अहिमाणलोहजुत्तो निवडइ संसारजलहिम्मि ॥ १ ॥ सरस्वत्यादिप्रतिमानां च पूर्ववत् मण्डलादिकं कर्म कृत्वा स्वेन स्वेन मन्त्रेण प्रतिष्ठा कर्तव्येति । तत्र तासां प्रतिष्ठादिमन्त्राः । ॐ क्ष्रूं नमः । ॐ ह्रीं हं ह्रीं नमः । ॐ जये श्रीं हँ सुभद्रेइं स्वाहा ॥ समस्तवैयावृत्यादीनामभिनासनाप्रतिष्ठासौभाग्यमन्त्रः । इदानीं विवरणे ॐ इं ह्रीं श्रीं ह्रीं इं सरस्वति अवतर २ तिष्ठ २ स्वाहा । ॐ ह्रीं माणिभद्रयक्ष अवतर २ तिष्ठ २ स्वाहा । ॐ ह्रीं वं ब्रह्मणे शान्ति अवतर २ तिष्ठ २ स्वाहा । ॐ ह्रीं अं अम्बिके अवतर २ तिष्ठ २ स्वाहा ॥ इति बिम्बप्रतिष्ठा तृतीया ॥ ॥ अथ हृत्प्रतिष्ठाविधिः ॥ तत्र पूर्ववत् मण्डपप्रवेशं विधायोत्तरवेदिकायां यथाविभवतो हेममयं पुरुषं संनिधाय पूर्ववत् संस्नाप्य चन्दनादिना विलिप्य वस्त्रैः संछाद्य निवासमण्डपं समानीय वेदिकायां संस्थाप्य जिनाज्ञया यदयाधितं द्वादशान्तात् समानीय तदनु । ॐ ह्रां आत्मन् त्वया जिनाज्ञया अत्र शरीरे संस्थातव्यमिति रेचकेन विन्यस्य कलाविद्यारागप्रभृतिबुद्धिअहङ्कारमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुतेजोजलपृथ्वीलक्षणं साधिपानधिवासिकं देहं विन्यस्य ॥ तद्यथा ॐ ह्रां कलायै नमः । ॐ ह्रां कलाधिपतये नमः । ॐ कलाधिपास्य

---

१ आणागेण इति पाठान्तरम् । २ ॐ क्षुं ह्रीं क्षूं ह्रीं नमः । ॐ जये श्रीं ह्रीं सुभद्रे इं स्वाहा इत्यन्यत्र ।

* अनिशानी न्यूनविधिं जिनबिम्बं यः स्थापयति मूढमनाः । अभिमानलोभयुक्तो निपतति संसारजलधौ ॥

कर्तृत्वव्यक्तिं कुरु २। ॐ हां विद्यायै नमः। ॐ हां विद्याधिपतये नमः। विद्याधिपास्य ज्ञानाभिव्यक्तिं कुरु २। ॐ हां रागाय नमः। ॐ हां रागाधिपतये नमः। रागाधिपास्य विषयेषु रागं कुरु २। ॐ हां बुद्ध्यै नमः। ॐ हां बुद्ध्यधिपतये नमः। बुद्ध्यधिपास्य बोधं कुरु २। ॐ हां अहङ्काराय नमः। ॐ हां अहङ्काराधिपतये नमः। अहङ्काराधिपास्याभिमानं कुरु २। ॐ हां मनसे नमः। ॐ हां मनोधिपतये चन्द्राय नमः। मनोधिपास्य संकल्पविकल्पं कुरु २। ॐ हां श्रोत्राभ्यां नमः। ॐ हां श्रोत्राधिपतये आदित्याय नमः। श्रोत्राधिपास्य शब्दग्राहकत्वं कुरु २। ॐ हां त्वचे नमः। ॐ हां त्वगधिपतये वायवे नमः। त्वगधिपास्य स्पर्शग्राहकत्वं कुरु २। ॐ हां चक्षुषे नमः। ॐ हां चक्षुरधिपतये रक्ताय नमः। चक्षुरधिपास्य रूपग्राहकत्वं कुरु २। ॐ हां घ्राणाय नमः। ॐ हां घ्राणाधिपतये अश्विभ्यां नमः। घ्राणाधिपास्य गन्धग्राहकत्वं कुरु २। ॐ हां वाचे नमः। ॐ हां वाचाधिपतये अग्नये नमः। वाचाधिपास्य वाचं कुरु २। ॐ हां पाणिभ्यां नमः। ॐ हां पाण्यधिपतये इन्द्राय नमः। पाण्यधिपास्य पदार्थग्राहकत्वं कुरु २। ॐ हां पादाभ्यां नमः। ॐ हां पादाधिपतये विष्णवे नमः। पादाधिपास्य गमनोत्साहं कुरु २। ॐ हां पायवे नमः। ॐ हां पाय्वधिपतये मित्राय नमः। पाय्वधिपास्य वायूत्सर्गं कुरु २। ॐ हां उपस्थाय नमः। ॐ हां उपस्थाधिपतये ब्रह्मणे नमः उपस्थाधिपास्यानन्दं कुरु २। ॐ हां शब्दाय नमः। ॐ हां स्पर्शाय नमः। ॐ हां रूपाय नमः। ॐ हां रसाय नमः। ॐ हां गन्धाय नमः। ॐ हां आकाशाय नमः। ॐ हां वायवे नमः। ॐ हां तेजसे नमः। ॐ हां अद्भ्यो नमः। ॐ हां पृथिव्यै नमः। एवं शेषतत्त्वजातं विन्यस्य

नाडीदशकं पुनरिडा पिङ्गला सुष्मना सावित्री शङ्खिनी कूष्माण्डी यशोवती हस्तिजिह्वा पूषा अलम्बुषाख्यं नाडीदशकं विन्यसेत्। ॐ ह्रां इडायै नमः एवं सर्वा प्राणापानसमानोदानव्याननागकूर्मघृकदेवदत्तधनञ्जयाख्यवायुदशकं विन्यसेत्। तदन्वाचार्यः गन्धपुष्पाक्षतादिभिः सम्पूज्य मुद्राभिरालभ्यार्हदाज्ञया प्रासादअपि यनञ्जगान्ना विन्यसेत्। ततः शुकनासोर्ध्वं गर्भगृहे खदायां हेमायेकस्थितिपर्यन्तं त्वया स्थातव्यमित्यनेन मार्गेण धरान्तं निरोधयेत्। ततः शुकनासोर्ध्वं गर्भगृहे खदायां हेमाद्येकनवं कुम्भं सूर्तिभूतं विन्यस्य मधुघृताभ्यामापूर्य रत्नादिपञ्चकं विन्यस्य चन्दनादिना आलिप्य शुक्ले वाससी परिधाप्य रत्नपुरुषं विन्यसेत्। ततो भगवन्तं संपूज्याचार्याणां यथाशक्त्या पूजां विधाय भगवन्तं क्षामयेत्॥ ॥ इति ध्वजप्रतिष्ठा चतुर्थी॥ ॥ अथ चूलिकादिप्रतिष्ठाविधिः॥ तत्र पूर्ववत् मण्डपवेदिकादिकं विधाय प्रतिष्ठोपयोगिद्रव्यजातमानीय भूतबलिं विधाय चैत्यवन्दनं कुर्यात्। तदनु चोत्तरवेदिकायां चूलकं कलशं ध्वजं धर्मचक्रं द्रव्यजातं चानीय रत्नौषधिकषायाष्टवर्गमृचन्दनसर्वौषध्यादिजलकलशैः संस्थाप्य श्वेते वाससी परिधाप्य अधिवासनामण्डपं प्रदक्षिणीकृत्य पूर्वद्वारेणान्तः प्रविश्य मूलवेदिकायां पर्यङ्के निवेश्य प्रतिमावत् सर्वेषां विधानमन्त्रेण गन्धधूपपुष्पाक्षतादिभिरधिवास्य बलिं निवेदयेत्। तदनु प्रासादं गत्वा कुम्भकजङ्घाशिखरकपालमलसारकेषु ब्रह्मपञ्चकं पृथिव्यादीनि च तत्त्वानि विन्यस्य पुष्पाक्षतादिभिर्मूलमन्त्रेण प्रासादमधिवासयेत्। ततो ध्वजं धर्मनेत्रपट्टांशुकादिनिर्मितं कनकघण्टिकाघर्घरिकोपशोभितं विचित्रपुष्पकटकालङ्कृते धूप-

१ सुषुम्ना इति स्यात्।

भादिचिह्निते दण्डे संयोज्य ईशान्यां मण्डलके कुम्भं विन्यस्य तस्योपरि तलिकायां महाध्वजं प्रासादायतिमानं लग्नसमये कृत्वा देशिकः शिल्पी वाऽन्यतमो वा प्रासादं प्रदक्षिणीकृत्य शुभाशयः प्रासादमधिरोहयेत् । ततश्चारुशक्तिं चूलकाधारे रत्नपञ्चकं विन्यस्य वाममार्गानुगामिना प्राणेन चूलकं कलशं ध्वजं धर्मचक्रं च यथाक्रमं स्थापयेत् । ततश्च लग्नसमये ध्वजाधारे रत्नपञ्चकं निक्षिप्य प्रणवासनं दत्वा वामनाडीप्राणेन सहोर्ध्वीभूतं दण्डं मूलमन्त्रेण निवेशयेत् । ततो मुद्रासहिताभिमन्त्रितकलशेन तत्कालोचितफलैर्धान्यैश्च घटमापूर्य कलशस्याभिषेकं कृत्वा श्वेतवाससी परिधापयेत् । तदनु मङ्गलशङ्खतूर्यादिनिर्घोषैर्महाध्वजं प्रसार्य चतुर्विधश्रीश्रमणसङ्घेन स्वबान्धवयुतेन यजमानेन सह प्रदक्षिणात्रयं विधाय आचार्यो ध्वजाग्रं श्रीमद्देवपादमूले संनिरोध्य शान्तिबलिं प्रक्षिप्य देवं सम्पूज्य क्षमापयेत् । तदनुकारापकाय ध्वजचटापनफलं श्रावयेत् ॥ तद्यथा ॥ देवस्यायतने भक्त्या ध्वजमारोपयन्ति ये । त्रैलोक्यश्रीस्तनोत्सङ्गे स्वं समारोपयन्ति ते ॥ १ ॥ धत्ते ध्वजोऽत्र धन्यानां सुरसद्मशिरःस्थितः । तरङ्गिततनुः साक्षात् स्वर्गनिःश्रेणिरूपताम् ॥२॥ यावन्तः प्राणिनस्तत्र लग्नाः कुर्युः प्रदक्षिणाः । तावन्तः प्राप्नुवन्त्यत्र शिवस्थानकमुत्तमम् ॥ ३ ॥ स च श्रुत्वा कृतकृत्यमात्मानं मन्यमानो देवगुरुसङ्घपूजां विधाय दीनानाथानां चानुकम्पया स्वविभवानुरूपमन्नदानादिकं दद्यादिति ॥

दण्डं च नूतनं वेणुमयं अव्यङ्गं सत्वचं सरलं शुभदेशजं प्रवर्धमानपर्व सर्वलक्षणसंयुतमाचार्यो गृहीत्वा देव-

१ त्वामिति पाठान्तरम् ।

प्रासादमानेन प्रमाणं परिकल्पयेत् । तत्र हस्तात्प्रभृति नवहस्तपर्यन्तेषु प्रतिमाप्रासादेषु चतुष्करादारभ्य त्रिवृद्ध्या दण्डप्रमाणमवसेयम् । ध्वजं चायामतो जङ्घार्धलम्बिजङ्घान्तं दण्डप्रमाणं च कर्तव्यम् । विस्तरतस्तु दशद्वादशषोडशाङ्गुल इति । मुक्ते हस्तोच्छ्रिते कलशात्कर्ता रोगातङ्कवर्जितः स्यात् । द्विहस्तोच्छ्रिते बहुप्रजो भवति । त्रिहस्तोच्छ्रिते धनधान्यैर्वर्धते । चतुर्हस्तोच्छ्रिते नृपवृद्धिः । पञ्चहस्तोच्छ्रिते सुभिक्षं राष्ट्रवृद्धिश्चेति । तथा प्राच्यां गते कर्ता सर्वकामावाप्तिं आग्नेय्यां तापं याम्यां व्याधिभयं नैर्ऋत्यां रोगातङ्कं वारुण्यां मित्रभावं वायव्यां धान्यसम्पदं उदीच्यां धनलाभं ऐशान्यामायुर्वृद्धिं प्राप्नोतीति ॥ तत्राशुभाशागते केतौ नमस्कारसहस्रं जपित्वा विशेषपूजां विधाय शान्तिं कुर्यात् ॥ इति शङ्कुप्रतिष्ठा पञ्चमी ॥

॥ अथ वेदिकालक्षणम् ॥ तत्र नन्दा सुनन्दा प्रबुद्धा सुप्रभा सुमङ्गला कुमुदमाला विमला पुण्डरीकिण्याख्या अष्टवेदिकाः । तत्रायामविस्ताराभ्यां हस्तप्रमाणा चतुरङ्गुलोच्छ्रया नन्दा । शेषास्तु विष्कम्भायामयोर्यथोत्तरं ह्रासवृद्ध्या पिण्डे चतुरङ्गुलाधिक्येनोत्तरोत्तरप्रवृद्धाः स्युः । तासां च मध्ये पूर्ववच्चतुरस्रं क्षेत्रं संसाध्य नन्दाद्येकतमां विचित्रमणिमयेन रजसा वेदिकां निष्पाद्य तत्कोणेषु ब्राह्मणक्षत्रियवैश्यशूद्राणां यथाक्रमं पलाशन्यग्रोधोदुम्बरशमीमयान् कीलकान्निवेशयेत् । यद्वा सर्वेषां वर्णानां वंशमयाः शस्तास्ते सर्वेऽप्येकदारुमया निर्व्रणा ऊर्ध्वशाखाश्रिता राजिकोटरवर्जिता निर्ग्रन्थयो द्वादशाङ्गुलप्रमाणाः कर्तव्याः । ते च काष्ठलोष्ठलोहाश्मभिर्न हन्तव्याः । वेधश्च त्याज्यः ॥ इति वेदिकालक्षणम् ॥

## ॥ अथ जीर्णोद्धारविधिः ॥

॥ तत्र खण्डितस्फुटितभग्नवलितपतितजीर्णदग्धसगर्भव्रणदूषितन्यूनाधिकवक्रविकरालभीषणदोषदुष्टं मन्त्रासन्निधानात् पिशाचादीनामधिष्ठानभूतं बिम्बमुद्धृत्य बिम्बान्तरं प्रतिष्ठापयेत् । मन्त्राचार्यः[1] प्रातरुत्थाय कृतशौचस्नानविधिर्विहितसकलीकरणः खण्डितस्फुटितभग्नादिकारणैर्[2]बिम्बान्तरं कर्तुकामः शान्त्यर्थं दिक्पालानां बलिं दद्यात् । ततः ॐ इन्द्राय प्रतिगृह्ण स्वाहा । ॐ अग्नये प्रतिगृह्ण स्वाहा । ॐ यमाय प्रतिगृह्ण स्वाहा । ॐ नैर्ऋतये प्रतिगृह्ण स्वाहा । ॐ वरुणाय प्रतिगृह्ण स्वाहा । ॐ वायवे प्रतिगृह्ण स्वाहा । ॐ कुबेराय प्रतिगृह्ण स्वाहा । ॐ ईशानाय प्रतिगृह्ण स्वाहा । ॐ ब्रह्मणे प्रतिगृह्ण स्वाहा । ॐ नागाय प्रतिगृह्ण स्वाहा । इति स्वस्वदिक्षु यथाक्रमं बहिर्बलिं प्रक्षिप्य वायव्यां ॐ क्षं क्षेत्रपालाय स्वाहेति क्षेत्रपालाय बलिं दत्वा । ॐ सर्वभूतेभ्यो वषट् स्वाहेति भूतादीन् संतर्प्य चैत्यादिवन्दनं कृत्वा मण्डलसमीपमागत्य स्वासनं प्रणवेन संपूज्य समुपविश्य भूतशुद्धिं सकलीकरणं विशेषार्घपात्रद्रव्यशुद्धिं कृत्वा आसनपूजाप्रभृत्यावाहनान्तं कर्म कृत्वाऽर्घपाद्याचमनीयानि दत्वा नित्यविधिना साङ्गं भगवन्तं सम्पूज्य । ततः प्राच्यां । ॐ इन्द्राय स्वाहा । ॐ वज्राय स्वाहा । आग्नेय्यां ॐ अग्नये स्वाहा । ॐ शक्तये स्वाहा । याम्यायां ॐ यमाय स्वाहा । ॐ दण्डाय स्वाहा । नैर्ऋत्यां ॐ नैर्ऋतये स्वाहा । ॐ खड्गाय स्वाहा । वारुण्यां ॐ वरुणाय स्वाहा । ॐ पाशाय स्वाहा । वायव्यां ॐ वायवे स्वाहा ।

१ तत्राचार्य इति पाठान्तरम् । २ खण्डितभग्नादि इति पाठः ।

ॐ ध्वजाय स्वाहा । उत्तरस्यां ॐ कुबेराय स्वाहा । ॐ गदायै स्वाहा । ऐशान्यां ॐ ईशानाय स्वाहा । ॐ शूलाय स्वाहा । अधश्च ॐ ब्रह्मणे स्वाहा । ॐ पद्माय स्वाहा । नैर्ऋत्यां ॐ नागाय स्वाहा । ॐ उत्तराय स्वाहा । एवं मायाल्लोकपालान् संपूज्य तदनु भो भोः शक्र त्वया स्वस्यां दिशि विघ्नप्रशान्तये सावधानेन शान्तिकर्मान्तं यावद्भगवदाज्ञया स्थातव्यमित्यनेन क्रमेण सर्वलोकपालान् भगवदाज्ञां श्रावयन्नस्त्रदुर्गमनुस्मरन् मण्डपस्याभ्यन्तरे समन्ताद्घर्घाम्भसां सेचनेन विघ्नोचाटनं विधाय देवसन्निधिं गत्वा सम्पूज्य प्रातिलोम्येन विसर्जनार्थमर्घं दत्वा भगवन्तं बिम्बमिदमशेषदोषावहमस्य चोद्धारे सति शान्तिः स्यादिति भगवतोक्तं । अतोऽस्य समुद्धाराय समुद्यतं मामधितिष्ठैवं कुर्विति लब्धानुज्ञो हेमाद्येकतमं कुम्भमानीय गालिताम्भसा प्रपूर्य चन्दनपुष्पाक्षतैः सम्पूज्य मूलमन्त्रेणाभिमन्त्र्य मुद्राभिरालभ्य देवं स्नपयेत् । तदनु बिम्बसंचालनार्थं साहस्रिकं जपं कृत्वा सुवर्णपुष्पाणामष्टोत्तरशतेन बिम्बस्य पूजां विधाय प्रतिमासमीपमागत्य प्रतिमाङ्गस्थितं सत्वं श्रावयेत् ॥ प्रतिमारूपमास्थाय येनादौ समधिष्ठिता । स शीघ्रं प्रतिमां त्यक्त्वा यातु स्थानं समीहितम् ॥ इति एवमुक्त्वा ॐ विसर २ स्वस्थानं गच्छेत्यनेन मन्त्रेणार्घं दत्वा प्रतिमाधिष्ठायकं देवविशेषं विसर्जयेत् । ततो हैमेन खनित्रेणास्त्राभिमन्त्रितेनोत्थाप्य हेमपाशया रज्ज्वा शिखायां प्रतिमां सश्रद्ध गजादिस्कन्धं संयोज्य लोकैः सह शान्तिर्भवत्विति बहिर्देवं नीत्वा शैलमयं बिम्बमगाधेऽम्भसि शिखरिणि वा क्षिपेत् । तथा मृन्मयं

१ पाशाय इति स्यात् । २ म्भसा इति ख. पाठः । ३ विघ्नोद्धाटनं इति पाठान्तरम् । ४ गजादेः स्कन्धमिति पाठान्तरम् ।

रत्नमयं वाअग्न्यादिदग्धमपि रत्नजं स्वतेजःस्थानवियुक्तं पूर्ववत् प्रतिष्ठापयेत् । सुवर्णादिलोहमयं तदेव समं विधाय तत्रैव स्थापयेत् । अनेनैव विधिना चूलकध्वजप्रासादादिकं वा दोषयुक्तं विसर्जयेत् ॥ प्रासादे चायं विशेषः ॥ प्रासादे मन्त्रानङ्गे समायोज्य बिम्बं संरक्ष्य प्रासादनिष्पत्तिपर्यन्तं षडङ्गं संपूजयेत् । निष्पन्ने च प्रासादे षडङ्गमन्त्रान् संहृत्य समुदायेन यथास्थानं मन्त्रन्यासः कार्य इति जीर्णोद्धारं विधाय प्रायश्चित्तजपं कुर्यात् । तदनु आचार्याणां दक्षिणां दत्वा क्षमस्वेति विसर्जयेत् । एवं जीर्णबिम्बादिकमुद्धृत्य तन्मयं तत्प्रमाणं तदाकारं अन्यत् बिम्बादिकं यथोक्तविधिना प्रतिष्ठापयेत् ॥ इति जीर्णोद्धारविधिः ॥

## ॥ अथ मुद्राविधिः ॥

तत्र दक्षिणाङ्गुष्ठेन तर्जनीमध्यमे समाक्रम्य पुनर्मध्यमामोक्षणेन नाराचमुद्रा ॥ १ ॥ किञ्चिदाकुञ्चिताङ्गुलीकस्य वामहस्तोपरि शिथिलमुष्टिदक्षिणकरस्थापनेन कुम्भमुद्रा ॥ २ ॥ इति शुद्धिमुद्राद्वयं ॥ बद्धमुष्ट्योः करयोः संलग्नसन्मुखाङ्गुष्ठयोः हृदयमुद्रा ॥१॥ तावेव मुष्टी समीकृतोर्ध्वाङ्गुष्ठौ शिरसि विन्यसेदिति शिरोमुद्रा ॥ २ ॥ पूर्ववत् मुष्टी बध्वा तर्जन्यौ प्रसारयेदिति शिखामुद्रा ॥ ३ ॥ पुनर्मुष्टिबन्धं विधाय कनीयस्यङ्गुष्ठौ प्रसारयेदिति कवचमुद्रा ॥ ४ ॥ कनिष्ठिकामङ्गुष्ठेन संपीड्य शेषाङ्गुलीः प्रसारयेदिति क्षुरप्रमुद्रा ॥ ५ ॥ दक्षिणकरेण मुष्टिं बध्वा तर्जनीमध्यमे प्रसारयेदिति अस्त्रमुद्रा ॥ ६ ॥ एता हृदयादीनां विन्यसनमुद्राः ॥ प्रसारिताधोमुखाभ्यां हस्ताभ्यां पादाङ्गुलीतलामस्तकस्पर्शान्महामुद्रा ॥ १ ॥ अन्योन्यग्रन्थिताङ्गुलीषु कनिष्ठिकानामिकयो-

मध्यमातर्जन्योश्च संयोजनेन गोस्तनाकारा धेनुमुद्रा ॥ २ ॥ हस्ताभ्यामञ्जलिं कृत्वा प्रकाममूलपर्वाङ्गुष्ठसंयोजनेनावाहनीमुद्रा ॥ ३ ॥ इयमेवाधोमुखी स्थापनी ॥ ४ ॥ संलग्नमष्युच्छ्रिताङ्गुष्ठौ करौ संनिधानी ॥ ५ ॥ तावेव गर्भगाङ्गुष्ठौ निष्ठुरा ॥ ६ ॥ एता आवाहनादिमुद्राः ॥ बद्धमुष्टेर्दक्षिणहस्तस्य मध्यमातर्जन्योर्विस्फारितप्रसारणेन गोवृषमुद्रा ॥१॥ बद्धमुष्टेर्दक्षिणहस्तस्य प्रसारिततर्जन्या वामहस्ततलताडनेन त्रासनीमुद्रा ॥२॥ एते नेत्रास्त्रयोः पूजामुद्रे ॥ अङ्गुष्ठे तर्जनीं संयोज्य शेषाङ्गुलीप्रसारणेन पाशमुद्रा ॥१॥ बद्धमुष्टेर्वामहस्तस्य तर्जनीं प्रसार्य किंचिदाकुञ्चयेदित्यङ्कुशमुद्रा ॥ २ ॥ संहतोर्ध्वाङ्गुलिवामहस्तमूले चाङ्गुष्ठं तिर्यग्विधाय तर्जनीचालनेन ध्वजमुद्रा ॥३॥ दक्षिणहस्तमुत्तानं विधायाधःकरशाखां प्रसारयेदिति वरदमुद्रा ॥४॥ एता जयादिदेवतानां पूजामुद्राः ॥ वामहस्तेन मुष्टिं बध्वा कनिष्ठिकां प्रसार्य शेषाङ्गुली कराङ्गुष्ठेन पीडयेदिति शङ्खमुद्रा ॥ १ ॥ परस्पराभिमुखहस्ताभ्यां वेणीबन्धं विधाय मध्यमे प्रसार्य संयोज्य च शेषाङ्गुलीभिर्मुष्टी बन्धयेदिति शक्तिमुद्रा ॥२॥ हस्तद्वयेनाङ्गुष्ठतर्जनीभ्यां वलके विधाय परस्परान्तःप्रवेशनेन शृङ्खलामुद्रा ॥ ३ ॥ वामहस्तस्योपरि दक्षिणकरं कृत्वा कनिष्ठिकाङ्गुष्ठाभ्यां मणिबन्धं संवेष्ट्य शेषाङ्गुलीनां विस्फारितप्रसारणेन वज्रमुद्रा ॥ ४ ॥ वामहस्ततले दक्षिणहस्तमूलं संनिवेश्य करशाखा विरलीकृत्य प्रसारयेदिति चक्रमुद्रा ॥ ५ ॥ पद्माकारौ करौ कृत्वा मध्येऽङ्गुष्ठौ कर्णिकाकारौ विन्यसेदिति पद्ममुद्रा ॥६॥ वामहस्तमुष्टेरुपरि दक्षिणमुष्टिं कृत्वा गात्रेण सह किञ्चि-

१ संनिधापनी इति स्यात्। २ शुंष्टि इति स. ड. पाठः। ३ शङ्खलमुद्रा इति पाठः।

दुन्नामयेदिति गदामुद्रा ॥ ७ ॥ अधोमुखवामहस्ताङ्गुलीर्घण्टाकाराः प्रसार्य दक्षिणेन मुष्टिं बध्वा तर्जनीमूर्ध्वां कृत्वा वामहस्ततले नियोज्य घण्टावच्चालनेन घण्टामुद्रा ॥ ८ ॥ उन्नतपृष्ठहस्ताभ्यां संपुटं कृत्वा कनिष्ठिके निष्कास्य योजयेदिति कमण्डलुमुद्रा ॥ ९ ॥ पताकावत् हस्तं प्रसार्य अङ्गुष्ठयोजनेन परशुमुद्रा ॥ १० ॥ यद्वा पताकाकारं दक्षिणकरं संहताङ्गुलिं कृत्वा तर्जन्यङ्गुष्ठाक्रमणेन परशुमुद्रा द्वितीया ॥ ११ ॥ ऊर्ध्वदण्डौ करौ कृत्वा पद्मवत् करशाखाः प्रसारयेदिति वृक्षमुद्रा ॥ १२॥ दक्षिणहस्तं संहताङ्गुलिमुन्नमय्य सर्पफणावत् किञ्चिदाकुञ्चयेदिति सर्पमुद्रा ॥ १३ ॥ दक्षिणकरेण मुष्टिं बद्ध्वा तर्जनीमध्यमे प्रसारयेदिति खड्गमुद्रा ॥ १४ ॥ हस्ताभ्यां संपुटं विधायाङ्गुलीः पद्मवद्विकास्य मध्यमे परस्परं संयोज्य तन्मूललग्नाङ्गुष्ठौ कारयेदिति ज्वलनमुद्रा ॥१५॥ बद्धमुष्टेर्दक्षिणकरस्य मध्यमाङ्गुष्ठतर्जन्योस्तलान्मूलाक्रमेण प्रसारयेदिति श्रीमणिमुद्रा ॥ १६ ॥ एताः षोडशविद्यादेवीनां मुद्राः ॥ ॥ दक्षिणहस्तेन मुष्टिं बद्ध्वा तर्जनीं प्रसारयेदिति दण्डमुद्रा ॥ १ ॥ परस्परोन्मुखौ मणिबन्धाभिमुखकरशाखौ करौ कृत्वा ततो दक्षिणाङ्गुष्ठकनिष्ठिकाभ्यां वाममध्यमानामिके तर्जनीं च तथा वामाङ्गुष्ठकनिष्ठिकाभ्यामितरस्य मध्यमानामिके तर्जनीं समाक्रमयेदिति पाशमुद्रा ॥२॥ परस्पराभिमुखमूर्ध्वाङ्गुल्यौ करौ कृत्वा तर्जनीमध्यमानामिका विरलीकृत्य परस्परं संयोज्य कनिष्ठिकाङ्गुष्ठौ पातयेदिति शूलमुद्रा ॥३॥ यद्वा पताकाकारं करं कृत्वा कनिष्ठिकामङ्गुष्ठेनाक्रम्य शेषाङ्गुलीः प्रसारयेदिति शूलमुद्रा द्वितीया ॥ ४ ॥ एताः

१ दक्षिणमुष्टिं इति पाठः ।

पूर्वोक्ताभिः सह दिक्पालानां मुद्राः ॥ ॥ ग्रासस्योपरि हस्तं प्रसार्य कनिष्ठिकादितर्जन्यन्तानामङ्गुलीनां क्रमसङ्कोचनेनाङ्गुष्ठमूलानयनात् संहारमुद्रा विसर्जनमुद्रेयम् ॥ उत्तानहस्तद्वयेन वेणीबन्धं विधायाङ्गुष्ठाभ्यां कनिष्ठिके तर्जनीभ्यां च मध्यमे संगृह्यानामिके समीकुर्यादिति परमेष्ठिमुद्रा ॥१॥ यद्वा वामकराङ्गुलीरूर्ध्वीकृत्य मध्यमां मध्यमे कुर्यादिति द्वितीया ॥ २ ॥ पराङ्मुखहस्ताभ्यां वेणीबन्धं विधायाभिमुखीकृत्य तर्जन्यौ संश्लेष्य शेषाङ्गुलिमध्ये अङ्गुष्ठद्वयं विन्यसेदिति पार्श्वमुद्रा ॥३॥ एता देवदर्शनमुद्राः ॥ ॥ इदानीं प्रतिष्ठोपयोगिमुद्राः । उत्तानौ किञ्चिदाकुञ्चितकरशाखौ पाणी विधारयेदिति अञ्जलिमुद्रा ॥ १ ॥ अभयाकारौ समश्रेणिस्थिताङ्गुलीकौ करौ विधायाङ्गुष्ठयोः परस्परग्रथनेन कपाटमुद्रा ॥ २ ॥ चतुरङ्गुलमग्रतः पादयोरन्तरं किञ्चिन्न्यूनं च पृष्ठतः कृत्वा समपादकायोत्सर्गेण जिनमुद्रा ॥३॥ परस्पराभिमुखौ ग्रथिताङ्गुलीकौ करौ कृत्वा तर्जनीभ्यामनामिके गृहीत्वा मध्यमे प्रसार्य तन्मध्येऽङ्गुष्ठद्वयं निक्षिपेदिति सौभाग्यमुद्रा ॥ ४ ॥ वामहस्ताङ्गुलितर्जन्या कनिष्ठिकामाक्रम्य तर्जन्यग्रं मध्यमया कनिष्ठिकाग्रं पुनरनामिकया आकुञ्च्य मध्येऽङ्गुष्ठं निक्षिपेदिति योनिमुद्रा ॥ ५ ॥ आत्मनोऽभिमुखदक्षिणहस्तकनिष्ठिकया वामकनिष्ठिकां संगृह्याधःपरावर्तितहस्ताभ्यां गरुडमुद्रा ॥ ६ ॥ संलग्नौ दक्षिणाङ्गुष्ठाक्रान्तवामाङ्गुष्ठपाणीति नमस्कृतिमुद्रा ॥ ७ ॥ किञ्चित् गर्भितौ हस्तौ समौ विधाय ललाटदेशयोजनेन मुक्ताशुक्तिमुद्रा ॥ ८ ॥ जानुहस्तोत्तमाङ्गादिसंप्रणिपातेन प्रणिपातमुद्रा ॥ ९ ॥ संमुखहस्ताभ्यां वेणीबन्धं विधाय मध्यमाङ्गुष्ठकनिष्ठिकानां परस्परयोजनेन त्रिशिखमुद्रा ॥ १० ॥ पराङ्मुखहस्ताभ्यामङ्गुलीर्वि-

दर्भ्यं मुष्टिं बध्वा तर्जन्यौ समीकृत्य प्रसारयेदिति भृङ्गारमुद्रा ॥ ११ ॥ वामहस्तमणिबन्धोपरि पराङ्मुखं दक्षिणकरं कृत्वा करशाखा विदर्भ्य किञ्चिद्वामवलनेनाधोमुखाङ्गुष्ठाभ्यां मुष्टिं बध्वा समुत्क्षिपेदिति योगिनीमुद्रा ॥ १२॥ ऊर्ध्वशाखं वामपाणिं कृत्वाऽङ्गुष्ठेन कनिष्ठिकामाक्रमयेदिति क्षेत्रपालमुद्रा ॥ १३ ॥ दक्षिणकरेण मुष्टिं बध्वा कनिष्ठिकाङ्गुष्ठौ प्रसार्य डमरुकवच्चालयेदिति डमरुकमुद्रा ॥ १४ ॥ दक्षिणहस्तेनोर्ध्वाङ्गुलिना पताकाकारेणाभयमुद्रा ॥ १५ ॥ तेनैवाधोमुखेन वरदा ॥ १६ ॥ वामहस्तस्य मध्यमाङ्गुष्ठयोजनेन अक्षसूत्रमुद्रा ॥ १७ ॥ बद्धमुष्टेर्दक्षिणहस्तस्य प्रसारिततर्जन्या वामहस्ततलताडनेन त्रासनी ॥१८॥ पद्ममुद्रेव प्रसारिताङ्गुष्ठसंलग्नमध्यमाङ्गुल्यग्रा बिम्बमुद्रा[1] ॥ १९ ॥ एताः सामान्यमुद्राः ॥ इति मुद्राविधिः ॥

## ॥ अथ प्रायश्चित्तविधिः ॥

तत्र श्रेष्ठबिम्बे नष्टे दग्धे तस्करादिहृते मूलमन्त्रस्य लक्षं जपित्वा बिम्बान्तरप्रतिष्ठापनेन शुद्ध्यति । हस्तात्पतिते व्यङ्गे दशसहस्रं जपित्वा पुनः पूजां कुर्यात् । द्विहस्तात्पतिते व्यङ्गे लक्षमेकं जपित्वा पुनः संस्कारेण शुद्ध्यति । पुरुषमात्रात्पतिते प्रयत्नपूर्वं सशलाके सर्वतो विशीर्णे प्रायश्चित्तं नास्तीति । अस्यायमर्थः—शलाकाभेदघातस्यातिगुरुत्वान्न प्रतिमादिना भवितव्यम् । स्थण्डिलेऽर्घ्यावाहनादिषु[2] समासे पूजाकर्मण्यविसर्जित एव देवेशे[3] प्रमादादुपघाते जाते अर्चापुष्पादिभ्यो मन्त्रान् संहृत्य सहस्रपञ्चकं जपित्वा साधून् भोजयेत् । देवो-

१ विश्वमुद्रा इत्यन्यत्र । २ अथावाहनादिषु इति ख. ग. पाठः । ३ दैवेन इति ग. पाठः ।

पकरणं पाठेन शुद्धा शतपञ्चकं जपेत्। सन्ध्यालोपे नीरुजः सोपवासं शतं जपेत्। सरुजः शतं जपेदेव। एकाहं देवस्यानर्चने त्रिरात्रमुपोषितः प्रत्यहं त्रिशतं जपेत्। निर्माल्यभक्षणे त्वकामान्नमस्कारायुतं (दशसहस्रं) जपेत्। ततो विशेषपूजया तपस्विदानेन शुद्ध्यति। कामतो लक्षं नमस्कारस्यावर्त्योपवासपञ्चकं कुर्यात्। निर्माल्यभेदाः कथ्यन्ते॥ देवस्वं देवद्रव्यं नैवेद्यं निवेदितं निर्माल्यं वेति। देवसम्बन्धिग्रामादि देवस्वं। अलंकारादि देवद्रव्यम्। देवार्थमुपकल्पितं नैवेद्यम्। तदेवोत्सृष्टं निवेदितं। बहिर्निक्षिप्तं निर्माल्यम्। पञ्चविधमपि निर्माल्यं न जिघ्रेन्नावलङ्घयेत् न च दद्यान्न विक्रीणीत। दत्वा क्रव्यादो भवति भुक्त्वा मातङ्गो लङ्घने सिद्धिहानिः आघ्राणे वृक्षः स्पर्शने स्त्रीत्वं विक्रये शबरः। पूजायां दीपालोकनधूपान्नादिगन्धे न दोषः। नदीप्रवाहनिर्माल्येऽपि च। सूतकशावाशौचयोः परकीययोर्न भोक्तव्यम्। भुक्त्वा वा अकामतः समुपोष्य मन्त्रसहस्रं जपेत्। कामतस्तूपवासत्रयं कृत्वा मूलमन्त्रं सहस्रत्रयमावर्तयेत्। आत्मसम्बन्धिनोः सूतकशावाशौचयोः सूतकिजनसंस्पर्शं विहाय पृथक्पाकेन भोक्तव्यमन्यथा नित्यहानिर्भवति। अथ सूतके शावाशौचे च सुधर्मस्थेन क्रियानुष्ठानपरेण ज्ञानवता वृत्तावता च न नित्यक्षतिः कार्या। यदि च नित्यानुष्ठानं न भवति प्रमादात् सूतकिसंसृष्टासाधारणपाकभोजनं वा तदा स उपोष्य सहस्रं जपेत्। कामतस्त्रिगुणं तदेव। आह्निकदेवतार्चनादिलोपे मूलमन्त्रस्यायुतं जपेत्। समुपोष्य शतं वा जपेत्॥ इति प्रायश्चित्तविधिः॥

## ॥ अथार्हदादीनां वर्णादिक्रमविधिः ॥

तत्राद्यं कनकावदातवृषलाञ्छनमुत्तराषाढाजातं धनूराशिं चेति । तथा तत्तीर्थोत्पन्नगोमुखयक्षं हेमवर्णगजवाहनं चतुर्भुजं वरदाक्षसूत्रयुतदक्षिणपाणिं मातुलिङ्गपाशान्वितवामपाणिं चेति । तथा तस्मिन्नेव तीर्थे समुत्पन्नामप्रतिचक्राभिधानां यक्षिणीं हेमवर्णां गरुडवाहनामष्टभुजां वरदबाणचक्रपाशयुक्तदक्षिणकरां धनुर्वज्रचक्राङ्कुशवामहस्तां चेति ॥ १ ॥ ॥ द्वितीयमजितस्वामिनं हेमाभं गजलाञ्छनं रोहिणीजातं वृषराशिं चेति । तथा तत्तीर्थोत्पन्नं महायक्षाभिधानं यक्षेश्वरं चतुर्मुखं श्यामवर्णं मातङ्गवाहनमष्टपाणिं वरदमुद्गराक्षसूत्रपाशान्वितदक्षिणपाणिं बीजपूरकाभयाङ्कुशशक्तियुक्तवामपाणिपल्लवं चेति । तथा तस्मिन्नेव तीर्थे समुत्पन्नामजिताभिधानां यक्षिणीं गौरवर्णां लोहासनाधिरूढां चतुर्भुजां वरदपाशाधिष्ठितदक्षिणकरां बीजपूरकाङ्कुशयुक्तवामकरां चेति॥२॥ ॥ तथा तृतीयं सम्भवनाथं हेमाभं अश्वलाञ्छनं मृगशिरजातं मिथुनराशिं चेति । तस्मिंस्तीर्थे समुत्पन्नं त्रिमुखयक्षेश्वरं त्रिमुखं त्रिनेत्रं श्यामवर्णं मयूरवाहनं षड्भुजं नकुलगदाभययुक्तदक्षिणपाणिं मातुलिङ्गनागाक्षसूत्रान्वितवामहस्तं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां दुरितारिदेवीं गौरवर्णां मेषवाहनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां फलाभयान्वितवामकरां चेति ॥३॥ ॥ तथा चतुर्थमभिनन्दनजिनं कनकद्युतिं कपिलाञ्छनं श्रवणोत्पन्नं मकरराशिं चेति । तत्तीर्थोत्पन्नमीश्वरयक्षं श्यामवर्णं गजवाहनं चतुर्भुजं मातुलिङ्गाक्षसूत्रयुतदक्षिणपाणिं नकुलाङ्कुशान्वितवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां कालिकादेवीं श्यामवर्णां

पद्मासनां चतुर्भुजां वरदपाशाधिष्ठितदक्षिणभुजां नागाङ्कुशान्वितवामकरां चेति ॥ ४ ॥ ॥ तथा पञ्चमं सुमति-
जिनं हेमवर्णं क्रौञ्चलाञ्छनं मघोत्पन्नं सिंहराशिं चेति । तत्तीर्थोत्पन्नं तुम्बरुयक्षं गरुडवाहनं चतुर्भुजं वरदश-
क्तियुतदक्षिणपाणिं नागपाशयुक्तवामहस्तं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां महाकालीं देवीं सुवर्णवर्णां पद्म-
वाहनां चतुर्भुजां वरदपाशाधिष्ठितदक्षिणकरां मातुलिङ्गाङ्कुशयुक्तवामभुजां चेति ॥ ५ ॥ ॥ तथा षष्ठं पद्मप्रभं
रक्तवर्णं कमललाञ्छनं चित्रानक्षत्रजातं कन्याराशिं चेति । तत्तीर्थोत्पन्नं कुसुमं यक्षं नीलवर्णं कुरङ्गवाहनं चतु-
र्भुजं फलाभययुक्तदक्षिणपाणिं नकुलकाक्षसूत्रयुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नामच्युतां देवीं
श्यामवर्णां नरवाहनां चतुर्भुजां वरदवीणान्वितदक्षिणकरां कार्मुकाभययुतवामहस्तां चेति ॥ ६ ॥ ॥ तथा
सप्तमं सुपार्श्वं हेमवर्णं स्वस्तिकलाञ्छनं विशाखोत्पन्नं तुलाराशिं चेति । तत्तीर्थोत्पन्नं मातङ्गयक्षं नीलवर्णं गज-
वाहनं चतुर्भुजं बिल्वपाशयुक्तदक्षिणपाणिं नकुलकाङ्कुशान्वितवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां शान्ता-
देवीं सुवर्णवर्णां गजवाहनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां शूलाभययुतवामहस्तां चेति ॥७॥ ॥ तथा-
ष्टमं चन्द्रप्रभजिनं धवलवर्णं चन्द्रलाञ्छनं अनुराधोत्पन्नं वृश्चिकराशिं चेति । तत्तीर्थोत्पन्नं विजययक्षं हरित-
वर्णं त्रिनेत्रं हंसवाहनं द्विभुजं दक्षिणहस्ते चक्रं वामे मुद्गरमिति । तस्मिन्नेव तीर्थे समुत्पन्नां भृकुटिदेवीं पीत-
वर्णां वराह( बिडाल )वाहनां चतुर्भुजां खड्गमुद्गरान्वितदक्षिणभुजां फलकपरशुयुतवामहस्तां चेति ॥ ८ ॥

१ याग इति पाठान्तरम् । २ विराल इति पाठान्तरम् ।

॥ तथा नवमं सुविधिजिनं धवलवर्णं मकरलाञ्छनं मूलनक्षत्रजातं धनूराशिं चेति। तत्तीर्थोत्पन्नमजितयक्षं श्वेतवर्णं कूर्मवाहनं चतुर्भुजं मातुलिङ्गाक्षसूत्रयुक्तदक्षिणपाणिं नकुलकुन्तान्वितवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां सुतारादेवीं गौरवर्णां वृषवाहनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणभुजां कलशाङ्कुशान्वितवामपाणिं चेति ॥९॥

॥ तथा दशमं शीतलनाथं हेमाभं श्रीवत्सलाञ्छनं पूर्वाषाढोत्पन्नं धनूराशिं चेति। तस्मिंस्तीर्थे समुत्पन्नं ब्रह्मयक्षं चतुर्मुखं त्रिनेत्रं धवलवर्णं पद्मासनमष्टभुजं मातुलिङ्गमुद्गरपाशाभययुक्तदक्षिपाणिं नकुलकगदाङ्कुशाक्षसूत्रान्वितवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां अशोकां देवीं मुद्गवर्णां पद्मवाहनां चतुर्भुजां वरदपाशयुक्तदक्षिणकरां फलाङ्कुशयुक्तवामकरां चेति ॥१०॥

॥ तथैकादशं श्रेयांसं हेमवर्णं गण्डकलाञ्छनं श्रवणोत्पन्नं मकरराशिं चेति। तत्तीर्थोत्पन्नमीश्वरयक्षं धवलवर्णं त्रिनेत्रं वृषभवाहनं चतुर्भुजं मातुलिङ्गगदान्वितदक्षिणपाणिं नकुलकाक्षसूत्रयुक्तवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां मानवीं देवीं गौरवर्णां सिंहवाहनां चतुर्भुजां वरदमुद्गरान्वितदक्षिणपाणिं कलशाङ्कुशयुक्तवामकरां चेति ॥ ११ ॥

॥ तथा द्वादशं वासुपूज्यं रक्तवर्णं महिषलाञ्छनं शतभिषजि जातं कुम्भराशिं चेति। तत्तीर्थोत्पन्नं कुमारयक्षं श्वेतवर्णं हंसवाहनं चतुर्भुजं मातुलिङ्गबाणान्वितदक्षिणपाणिं नकुलकधनुर्युक्तवामपाणिं चेति। तस्मिन्नेव तीर्थे समुत्पन्नां प्रचण्डादेवीं श्यामवर्णां अश्वारूढां चतुर्भुजां वरदशक्तियुक्तदक्षिणकरां पुष्पगदायुक्तवामपाणिं चेति ॥ १२ ॥

॥ तथा त्रयोदशं विमलनाथं कनकवर्णं वराहलाञ्छनं उत्तरभाद्रपदाजातं मीनराशिं चेति। तत्तीर्थोत्पन्नं षण्मुखं यक्षं श्वेतवर्णं

॥ ३५ ॥

शिखिवाहनं द्वादशभुजं फलचक्रबाणखड्गपाशाक्षसूत्रयुक्तदक्षिणपाणिं नकुलचक्रधनुःफलकाङ्कुशाभययुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां विदितां देवीं हरितालवर्णां पद्मारूढां चतुर्भुजां बाणपाशयुक्तदक्षिणपाणिं धनुर्नागयुक्तवामपाणिं चेति ॥ १३ ॥ ॥ तथा चतुर्दशं अनन्तं जिनं हेमवर्णं श्येनलाञ्छनं स्वातिनक्षत्रोत्पन्नं तुलाराशिं चेति । तत्तीर्थोत्पन्नं पातालयक्षं त्रिमुखं रक्तवर्णं मकरवाहनं षड्भुजं पद्मखड्गपाशयुक्तदक्षिणपाणिं नकुलफलकाक्षसूत्रयुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां अङ्कुशां देवीं गौरवर्णां पद्मवाहनां चतुर्भुजां खड्गपाशयुक्तदक्षिणकरां चर्मफलकाङ्कुशयुतवामहस्तां चेति ॥ १४ ॥ ॥ तथा पञ्चदशं धर्मं जिनं कनकवर्णं वज्रलाञ्छनं पुष्योत्पन्नं कर्कराशिं चेति । तत्तीर्थोत्पन्नं किंनरयक्षं त्रिमुखं रक्तवर्णं कूर्मवाहनं षड्भुजं बीजपूरकगदाभययुक्तदक्षिणपाणिं नकुलपद्माक्षमालायुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां कन्दर्पां देवीं गौरवर्णां मत्स्यवाहनां चतुर्भुजां उत्पलाङ्कुशयुक्तदक्षिणकरां पद्माभययुक्तवामहस्तां चेति ॥ १५॥ ॥ तथा षोडशं शान्तिनाथं हेमवर्णं मृगलाञ्छनं भरण्यां जातं मेषराशिं चेति । तत्तीर्थोत्पन्नं गरुडयक्षं वराहवाहनं क्रोडवदनं श्यामवर्णं चतुर्भुजं बीजपूरकपद्मयुक्तदक्षिणपाणिं नकुलकाक्षसूत्रवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां निर्वाणां देवीं गौरवर्णां पद्मासनां चतुर्भुजां पुस्तकोत्पलयुक्तदक्षिणकरां कमण्डलुकमलयुतवामहस्तां चेति ॥ १६ ॥ ॥ तथा सप्तदशं कुन्थुनाथं कनकवर्णं छागलाञ्छनं कृत्तिकाजातं वृषभराशिं चेति । तत्तीर्थोत्पन्नं गन्धर्वयक्षं श्यामवर्णं हंसवाहनं चतुर्भुजं वरदपाशान्वितदक्षिणभुजं मातुलिङ्गाङ्कुशाधिष्ठितवा-

मभुजं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां बलां देवीं गौरवर्णां मयूरवाहनां चतुर्भुजां बीजपूरकशूलान्वितदक्षिणभुजां भुषुण्ढिपद्मान्वितवामभुजां चेति ॥ १७ ॥ ॥ तथा अष्टादशमं अरनाथं हेमाभं नन्दावर्त[1]लाञ्छनं रेवतीनक्षत्रजातं मीनराशिं चेति । तत्तीर्थोत्पन्नं यक्षेन्द्रयक्षं षण्मुखं त्रिनेत्रं श्यामवर्णं शम्बरवाहनं द्वादशभुजं मातुलिङ्गबाणखड्गमुद्गरपाशाभययुक्तदक्षिणपाणिं नकुलधनुश्चर्मफलकशूलाङ्कुशाक्षसूत्रयुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां धारणीं देवीं कृष्णवर्णां चतुर्भुजां पद्मासनां मातुलिङ्गोत्पलान्वितदक्षिणभुजां पाशाक्षसूत्रान्वितवामकरां चेति ॥ १८ ॥ ॥ तथैकोनविंशतितमं मल्लिनाथं प्रियङ्गुवर्णं कलशलाञ्छनं अश्विनीनक्षत्रजातं मेषराशिं चेति । तत्तीर्थोत्पन्नं कुवेरयक्षं चतुर्मुखमिन्द्रायुधवर्णं गरुडवदनं गजवाहनं अष्टभुजं वरदपाश[3]चापशूलाभययुक्तदक्षिणपाणिं बीजपूरकशक्तिमुद्गराक्षसूत्रयुक्तवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां वैरोट्यां देवीं कृष्णवर्णां पद्मासनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां मातुलिङ्गशक्तियुक्तवामहस्तां चेति ॥ १९ ॥ ॥ तथा विंशतितमं मुनिसुव्रतं कृष्णवर्णं कूर्मलाञ्छनं श्रवणजातं मकरराशिं चेति । तत्तीर्थोत्पन्नं वरुणयक्षं चतुर्मुखं त्रिनेत्रं धवलवर्णं वृषभवाहनं जटामुकुटमण्डितं अष्टभुजं मातुलिङ्गगदाबाणशक्तियुतदक्षिणपाणिं नकुलकपद्मधनुःपरशुयुतवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां वरदत्तां देवीं गौरवर्णां भद्रासनारूढां चतुर्भुजां वरदाक्षसूत्रयुतदक्षिणकरां बीजपूरक[4]कुम्भयुतवामहस्तां चेति ॥ २० ॥

१ नन्द्यावर्त इति पाठः । २ शङ्ख इति पाठान्तरम् । ३ वरदपरशु इति पाठः । ४ मातुलिङ्गशूल इति पाठः ।

॥ एकविंशतितमं नमिजिनं कनकवर्णं नीलोत्पललाञ्छनं अश्विनीजातं मेषराशिं चेति । तत्तीर्थोत्पन्नं भृकुटियक्षं चतुर्मुखं त्रिनेत्रं हेमवर्णं वृषभवाहनं अष्टभुजं मातुलिङ्गशक्तिमुद्गराभययुक्तदक्षिणपाणिं नकुलपरशुवज्राक्षसूत्रवामपाणिं चेति । नमेर्गान्धारीदेवीं श्वेतां हंसवाहनां चतुर्भुजां वरदखड्गयुक्तदक्षिणभुजद्वयां बीजपूरकुम्भयुतवामपाणिद्वयां चेति ॥ २१ ॥ ॥ तथा द्वाविंशतितमं नेमिनाथं कृष्णवर्णं शङ्खलाञ्छनं चित्राजातं कन्याराशिं चेति । तत्तीर्थोत्पन्नं गोमेधयक्षं त्रिमुखं श्यामवर्णं पुरुषवाहनं षड्भुजं मातुलिङ्गपरशुचक्रान्वितदक्षिणपाणिं नकुलकशूलशक्तियुतवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां कूष्माण्डीं देवीं कनकवर्णां सिंहवाहनां चतुर्भुजां मातुलिङ्गपाशयुक्तदक्षिणकरां पुत्राङ्कुशान्वितवामकरां चेति ॥ २२ ॥ ॥ तथा त्रयोविंशतितमं पार्श्वनाथं प्रियङ्गुवर्णं फणिलाञ्छनं विशाखाजातं तुलाराशिं चेति । तत्तीर्थोत्पन्नं पार्श्वयक्षं गजमुखमुरगफणामण्डितशिरसं श्यामवर्णं कूर्मवाहनं चतुर्भुजं बीजपूरकोरगयुतदक्षिणपाणिं नकुलकाहियुतवामपाणिं चेति । तस्मिन्नेव तीर्थे समुत्पन्नां पद्मावतीं देवीं कनकवर्णां कुर्कुटवाहनां चतुर्भुजां पद्मपाशान्वितदक्षिणकरां फलाङ्कुशाधिष्ठितवामकरां चेति ॥ २३ ॥ ॥ तथा चतुर्विंशतितमं वर्धमानस्वामिनं कनकप्रभं सिंहलाञ्छनं उत्तराफाल्गुन्यां जातं कन्याराशिं चेति । तत्तीर्थोत्पन्नं मातङ्गयक्षं श्यामवर्णं गजवाहनं द्विभुजं दक्षिणे नकुलं वामे बीजपूरकमिति । तत्तीर्थोत्पन्नां सिद्धायिकां हरितवर्णां सिंहवाहनां चतुर्भुजां पुस्तकाभययुक्तदक्षिणकरां

१ कुक्कुट इति पाठान्तरम् ।

मातुलिङ्गबाणान्वितवामहस्तां चेति ॥ २४ ॥ तथा श्रुतदेवतां शुक्लवर्णां हंसवाहनां चतुर्भुजां वरदकमलान्वितदक्षिणकरां पुस्तकाक्षमालान्वितवामकरां चेति । तथा शान्तिदेवतां धवलवर्णां कमलासनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां कुण्डिकाकमण्डलवन्वितवामकरां चेति ॥ इति अर्हदादीनां वर्णादिक्रमकथनम् ॥

## ॥ अथ विद्यादेवीनां षोडशकम् ॥

तत्राद्यां रोहिणीं धवलवर्णां सुरभिवाहनां चतुर्भुजामक्षसूत्रबाणान्वितदक्षिणपाणिं शङ्खधनुर्युक्तवामपाणिं चेति ॥ १ ॥ तथा प्रज्ञप्तिं श्वेतवर्णां मयूरवाहनां चतुर्भुजां वरदशक्तियुक्तदक्षिणकरां मातुलिङ्गशक्तियुक्तवामहस्तां चेति ॥ २ ॥ तथा वज्रशृङ्खलां शङ्खावदातां पद्मवाहनां चतुर्भुजां वरदशृङ्खलान्वितदक्षिणकरां पद्मशृङ्खलाधिष्ठितवामकरां चेति ॥ ३ ॥ तथा वज्राङ्कुशां कनकवर्णां गजवाहनां चतुर्भुजां वरदवज्रयुतदक्षिणकरां मातुलिङ्गाङ्कुशयुक्तवामहस्तां चेति ॥ ४ ॥ तथा अप्रतिचक्रां तडिद्वर्णां गरुडवाहनां चतुर्भुजां चक्रचतुष्टयभूषितकरां चेति ॥ ५ ॥ तथा पुरुषदत्तां कनकावदातां महिषीवाहनां चतुर्भुजां वरदासियुक्तदक्षिणकरां मातुलिङ्गखेटकयुतवामहस्तां चेति ॥ ६ ॥ तथा कालीं देवीं कृष्णवर्णां पद्मासनां चतुर्भुजां अक्षसूत्रगदालङ्कृतदक्षिणकरां वज्राभययुतवामहस्तां चेति ॥ ७ ॥ तथा महाकालीं देवीं तमालवर्णां पुरुषवाहनां चतुर्भुजां अक्षसूत्रवज्रान्वितदक्षिणकरामभयघण्टालङ्कृतवामभुजां चेति ॥८॥ तथा गौरींदेवीं कनकगौरीं गोधावाहनां चतुर्भुजां वरदमुसलयुतदक्षिणकरामक्षमालाकुवलयालङ्कृतवामहस्तां चेति ॥ ९ ॥ तथा गान्धारींदेवीं नीलवर्णां कम-

विद्यादेवीनां षोडशकम्

॥ ३७ ॥

लासनां चतुर्भुजां वरदमुसलयुतदक्षिणकरां अभयकुलिशयुतवामहस्तां चेति ॥ १० ॥ सर्वास्त्रमहाज्वालां धवलवर्णां वराहवाहनां असंख्यप्रहरणयुतहस्तां चेति ॥ ११ ॥ तथा मानवीं श्यामवर्णां कमलासनां चतुर्भुजां वरदपाशालङ्कृतदक्षिणकरां अक्षसूत्रविटपालङ्कृतवामहस्तां चेति ॥ १२ ॥ तथा वैरोट्यां श्यामवर्णां अजगरवाहनां चतुर्भुजां खड्गोरगालङ्कृतदक्षिणकरां खेटकाहियुतवामकरां चेति ॥ १३ ॥ तथा अच्छुप्तां तडिद्वर्णां तुरगवाहनां चतुर्भुजां खड्गबाणयुतदक्षिणकरां खेटकाहियुतवामकरां चेति ॥ १४ ॥ तथा मानसीं धवलवर्णां हंसवाहनां चतुर्भुजां वरदवज्रालङ्कृतदक्षिणकरां अक्षवलयाशनियुक्तवामकरां चेति ॥ १५ ॥ तथा महामानसीं धवलवर्णां सिंहवाहनां चतुर्भुजां वरदासियुक्तदक्षिणकरां कुण्डिकाफलकयुतवामहस्तां चेति ॥ १६ ॥ इति विद्यादेवीषोडशकम् ॥

## ॥ अथ लोकपालाः ॥

तत्र शक्रं पीतवर्णं ऐरावतवाहनं वज्रपाणिं चेति ॥ १ ॥ तथा अग्निं अग्निवर्णं मेषवाहनं ससशिखं शक्तिपाणिं चेति ॥ २ ॥ तथा यमराजं कृष्णवर्णं महिषवाहनं दण्डपाणिं चेति ॥ ३ ॥ तथा नैर्ऋतिं हरितवर्णं शववाहनं खड्गपाणिं चेति ॥ ४ ॥ तथा वरुणं धवलवर्णं मकरवाहनं पाशपाणिं चेति ॥ ५ ॥ तथा वायुं सितवर्णं मृगवाहनं वज्रा( ध्वजा )लङ्कृतपाणिं चेति ॥ ६ ॥ तथा कुबेरमनेकवर्णं निधिनवकाधिरूढं निचुलकहस्तं तुन्दिलं गदापाणिं चेति ॥ ७ ॥ तथेशानं धवलवर्णं वृषभवाहनं त्रिनेत्रं शूलपाणिं चेति ॥ ८ ॥ तथा नागं

श्यामवर्णं पद्मवाहनमुरगपाणिं चेति ॥ ९ ॥ तथा ब्रह्माणं धवलवर्णं हंसवाहनं कमण्डलुपाणिं चेति ॥ १० ॥
इति दिक्पालदशकम् ॥

## ॥ अथ ग्रहाः ॥

तत्रादित्यं हिङ्गुलवर्णमूर्ध्वस्थितं द्विभुजं कमलपाणिं चेति ॥ १ ॥ तथा सोमं श्वेतवर्णं द्विभुजं दक्षिणे अक्षसूत्रं वामे कुण्डिकां चेति ॥ २ ॥ तथाङ्गारकं रक्तवर्णं द्विभुजं दक्षिणेऽक्षसूत्रं वामे कुण्डिकां चेति ॥ ३ ॥ तथा बुधं पीतवर्णं द्विभुजं अक्षसूत्रकुण्डिकापाणिं चेति ॥ ४ ॥ तथा सुरगुरुं पीतवर्णं द्विभुजं अक्षसूत्रकुण्डिकापाणिं चेति ॥ ५ ॥ तथा शुक्रं श्वेतवर्णं द्विभुजं अक्षसूत्रकमण्डलुपाणिं चेति ॥ ६ ॥ तथा शनैश्चरमीषत्कृष्णं द्विभुजं लम्बकूर्चं किञ्चित्पीतं द्विभुजमक्षमालाकमण्डलुयुक्तपाणिं चेति ॥ ७ ॥ तथा राहुमतिकृष्णवर्णं अर्धकायरहितं द्विभुजमर्धमुद्रान्वितपाणिं चेति ॥ ८ ॥ तथा केतुं धूम्रवर्णं द्विभुजमक्षसूत्रकुण्डिकान्वितपाणिं चेति ॥९॥ इति ग्रहनवकम् ॥ तथा ब्रह्मशान्तिं पिङ्गवर्णं दंष्ट्राकरालं जटामुकुटमण्डितं पादुकारूढं भद्रासनस्थितमुपवीतालङ्कृतस्कन्धं चतुर्भुजं अक्षसूत्रदण्डकान्वितदक्षिणपाणिं कुण्डिकाछत्रालङ्कृतवामपाणिं चेति ॥ १ ॥ तथा क्षेत्रपालं क्षेत्रानुरूपनामानं श्यामवर्णं बर्बरकेशमावृत्तपिङ्गनयनं विकृतदंष्ट्रं पादुकाधिरूढं नग्नं कामचारिणं षड्भुजं मुद्गरपाशडमरुकान्वितदक्षिणपाणिं श्वानाङ्कुशगेडिकायुक्तवामपाणिं श्रीमद्भगवतो

दक्षिणपार्श्वे ईशानाश्रितं दक्षिणाशामुखमेव प्रतिष्ठाप्यमिति ॥ २ ॥ इति श्रीनिर्वाणकलिकाभिधानायां प्रतिष्ठापद्धतौ श्रीमज्जिनादीनां वर्णादिविधिः ॥

## ॥ अथ प्रशस्तिः ॥

श्रीविद्याधरवंशभूषणमणिः प्रख्यातनामा भुवि । श्रीमत्सङ्गमसिंह इत्यधिपतिः श्वेताम्बराणामभूत् ॥ शिष्यस्तस्य बभूव मण्डनगणिर्योवाचनाचार्य इत्युच्चैः पूज्यपदं गुणैर्गुणवतामग्रेसरः प्रासवान् ॥ १ ॥ क्षान्तेः क्षेत्रं गुणमणिनिधिस्तस्य पादलिप्तसूरिर्जातः शिष्यो निरुपमयशःपूरिताशावकाशः ॥ विन्यस्तेयं निपुणमनसा तेन सिद्धान्तमस्राण्यालोच्यैषा विधिमविदुषां पद्धतिर्बोधिहेतोः ॥ २ ॥ शुभमस्तु ॥ सं० १८५२ मिति कार्तिकशुक्लपूर्णिमायां लिखितमिदम् ॥



# निर्वाणकलिकाशुद्धिपत्रम् ।

| पत्रं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २—१ | ६ | क्ष्वीं क्ष्वीं | इर्वीं क्ष्वीं |
| २—१ | १२ | ऊध्वदन्तपङ्क्तौ | ऊर्ध्वदन्तपङ्क्तौ |
| ४—१ | ९ | उ॰ शनैश्चराय | ॐ शनैश्चराय |
| ४—२ | ६ | ०रादावमुखेनापि | ०रादावन्यमुखेनापि |
| ६—१ | ९ | तत्समं तत्र | तत्समसूत्रं |
| ६—२ | १ | अङ्गुलानि | त्र्यङ्गुलानि |
| ६—२ | ६ | अघराग्रं | मंथराग्रं |
| ६—२ | ७ | वीथीषु त्रीन् | वीथीसूत्रीन् |
| ७—२ | १ | नाश्नीयात् ७ मद्यमांसादिकं न भक्षयेत् ८। गुरोराज्ञां न लङ्घयेत् ८ । | नाश्नीयात् ७ मद्यमांसादिकं न भक्षयेत् ७। गुरोराज्ञां न लङ्घयेत् ८ । |
| ८—२ | १३ | ०मिमयातुय— | ०मिमक्रयातु— |
| १०—२ | ७ | कचटतपयसहयजै० | ०कचटतपसहयजै० |
| ११—१ | ३ | सज्य | सत्य |
| ११—१ | १० | विलिपिच्छा | पिलिपिच्छा |
| ११—१ | १२ | पूर्ववादसरक्षादिकं | पूर्ववत्संरक्षादिकं |
| १५—१ | १४ | ७ अः पाठान्तरं | ७ क्षः पाठान्तरम् |

| पत्रं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५–२ | ७ | आङ्गजलं | आ ४ जलं |
| १६–२ | १२ | इच्छायाः ॥ १ ॥ | इच्छया ॥ १ ॥ |
| १७–१ | ४ | पूर्वोत्तराई (सु) रोहिंणी | पूर्वोत्तराइ (सु) रोहिणी |
| १७–१ | ९ | नामरूपापि | नामरूपाणि |
| १७–२ | १४ | कुबेरत्रा | कुबेरश्च |
| १८–२ | ११ | ०गन्धार्ये | ०गन्धार्यै |
| २१–२ | १२ | ०वस्तुता | वस्तृता |
| २२–१ | ४ | द्रमासि | द्रमार्सि |
| २२–१ | ७ | संघसहिता | संघसहित |

| पत्रं | पंक्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३–१ | ८ | रत्नगर्भा | रत्नगर्भ |
| २४–१ | ६ | परिवट्टमाण | परिवड्ढमाण |
| २४–१ | ७ | नन्दंन्ति | नन्दन्ति |
| २५–२ | १ | वटइ | वट्टइ |
| ३२–१ | २ | संलग्नमस्तु | संलग्नमुस्तु |
| ३२–१ | ८ | शेपाङ्गुला | शेषाङ्गुलीः |
| ३२–२ | ८ | ०तर्जन्योस्तलान्मूलाक्रमेण | ०तर्जन्यो मूलात्क्रमेण |
| ३६–१ | २ | पाणि चेति | पाणिं चेति |



